# अस्यवामीयसूक्तम्

## आचार्यगोविन्दकृतभाष्यसहितम्

**सम्पादकः**

**डा. बन्नञ्जेपदोपाह्वः आचार्यगोविन्दः**

विद्यावाचस्पतिः, विद्यारत्नाकरः,

पद्मश्रीपदभाक्

**प्रकाशनी**

**तत्वसंशोधनसंसत्**

**विद्यामान्यप्रकाशनम्**

**श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम् (उडुपि)**

२२-७-११



ASYAVAMĪYASŪKTAM- with a new Bhashya by Dr.Bannañje Govindācārya

Edited by : Vidyāratnākara Dr. Bannañje Govindācārya

Published by : Tatva-Samśodhana-Samsat
Śrī Vidyāmānya Prakāśana
Śrī Hṛṣīkeśa-Tīrtha-Samsthānam,
(Śrī Palimāru Maṭha) Uḍupi,
Karnataka, (India)
Tel.: 0820-2523402



I Edition : 2011

Copies : 500

Pages : 12+76

Price : Rs-40

Cover design : K.M. Sheshagiri

Typeset : Kaddi. S. Badarinarayanachar
Poornaprajna Vidyapeetha
E-Mail : bnkaddi@gmail.com

Printed at : Rajaprakash Prints
No. 142, I main road , Chamarajpet,
Bangalore -560 018
Tel. (080) 26521515

## संसदियं कृतज्ञतामर्पयति

गहनार्थस्य अस्यवामीयसूक्तस्य मनोज्ञं भाष्यं प्रणीय, सम्पाद्य च ग्रन्थमिमम्, बुभुत्सूनाममत्सराणां कृतोपकाराय विद्वदग्रण्ये श्रीमते पद्मश्रीप्रशस्तिभाजनाय डा. बन्नञ्जेपदोपाह्वाय आचार्यगोविन्दाय ।

गणकयन्त्रद्वारा लिपिमुद्राङ्कनेन निर्व्याजमुपकृतवते विपश्चिते श्रीमते कड्डीपदोपाह्वाय बदरीनारायणाचार्याय ।

अक्षरशोधनकर्मणि सहकृतवते श्रीमते विजयसिंहाय कृष्णराजाय च ।

पुस्तकस्यास्य मुखपत्रविन्यासकर्मणि दर्शितकौशलाय चित्रकलापरिणताय श्रीमते के. एम्. शेषगिरिशर्मणे ।

मनोज्ञमुद्रणकर्मणि कृतसहकाराय ‘राज्प्रकाश् प्रिण्ट्स्’ मुद्रणालयाधिकृताय श्रीमते श्रीप्रकाशाय ।

ग्रन्थमेतं क्रीत्वा पिपठिषुभ्यः सर्वेभ्यश्च सहृदयेभ्यः ।

**रजतपीठपुरम् (उडुपि)**
**शा.श.१९३३, खरसंवत्, वै.शु.त्रयोदशी**
[15.4.2011]

**तत्वसंशोधनसंसत्**
**श्रीहृषीकेशतीर्थसंस्थानम्**
**श्रीपलिमारुमठः**



# किञ्चिदादौ निवेदनीयम्

‘अस्यवामीयम्’ नामेदं महासूक्तं शतर्चिना महर्षिणा दीर्घतमसा दृष्टम् । द्विपञ्चाशता मन्त्रैः सन्दृब्धम्, अद्भुतं चातिगहनार्थं च । तत्ववादिनां प्रियतमा द्वासुपर्णाख्या ऋगपि दीर्घतमसैवाऽविष्कृता सत्येतत्सूक्तगतैव । कर्णाटकभाषायां दासवाङ्मये ‘बेडगु’(ಬೆಡಗು) इति, ‘मुण्डिगे’(ಮುಂಡಿಗೆ) इति प्रथितानां दुरवगमार्थानां गीतिकाप्रभेदानां मूलमिदं सूक्तं स्यादिति भाति, यान् ‘ओगटिन हाडु’ (ಒಗಟಿನ ಹಾಡು) इत्यप्याचक्षते ॥

सोऽयमपूर्व ऋचां निचयः ऋग्वेदे प्रथममण्डले द्वाविंशेऽनुवाके १६४तमसूक्ततया पठ्यते । अथर्ववेदे च (९.९.१०) । तत्ववादिनामतिप्रियमपीदं सूक्तं न केनाप्येता-वन्तमनेहसं सिद्धान्तानुगुणं व्याख्यास्यत । इदमुपक्रमं तद्व्याख्यान-प्रयतनसाहसमकारि मया । तस्य चेयं पूर्वकथा–

श्रीबाळगारुमठाधीशानां श्रीमदक्षोभ्यतीर्थसंस्थानमधिरूढानां श्रीरघुभूषणतीर्थश्रीपादानामपेक्षया तदीये मठेऽपूर्वस्यास्य सूक्तस्य प्रवचनकार्यं निरवर्तत । ‘बेङ्गळूरु’नगरादागताः शास्त्रेष्वधीतिनो बहवो युवानः श्रद्दधानाः श्रोतारो बभूवुः । निरन्तरायं प्रावर्तत प्रवचनम् । श्रीपादानां करुणया प्रेम्णा च सम्भृतमद्भुतं प्रोत्साहनं वक्तुश्च श्रोतॄणां चोत्साहं द्विगुणयामास । एवमपूर्वमन्त्राम्नायश्रवणजनितप्रमोदा विनेयास्तदा मां विज्ञापयामासुः– प्रणीयतामस्य प्रवचनस्य सङ्ग्रहरूपं किमपि सूक्तभाष्यमिति । तत्प्रार्थनाफलमिदम् ॥

२२-७-११

आचार्यमध्वस्य तत्ववादानुगुणं सूक्तार्थवर्णनं बहोः कालाद् बुभुत्सुभिरभिलषितमासीत् । दिष्ट्या स कालः समुपगतः । तदर्थोऽस्य प्रयासः । अनेन यदि निर्मत्सराणां वेदार्थचिन्तनपराणां स्यात् कोऽप्युपकारलेशः, तर्हि सफलोऽयं प्रयत्न इति मन्ये । यथाप्रज्ञं प्रायत्यत पूर्णप्रज्ञकृपावलम्बनेन । अथ महान्तः प्रमाणम् । अनधीतशिक्षानिरुक्तादीनामसूयामात्रभूषणानां पुरोभागितामात्रसाधनसर्वस्वानां नात्र नासाविन्यासावकाशः । भवभूतिवचनमेव तेषां प्रतिवचनं भवति–'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान् प्रति नैष यत्नः' इति ॥

श्रीहरिपदमिताः श्रीविद्यामान्यतीर्थश्रीचरणाः समधिगतसमस्तशास्त्रसाराः सारासारविवेकचतुरा विद्यागुरवो मम । तेषां प्रीतिपात्रेषु चरमोऽयमन्तेवासी । तेषामाज्ञा मां जागरयति मुहुर्मुहुः–'परिणतोऽसि वेदार्थप्रवचने । चतुरोऽसि वेदानामपूर्वार्थनिर्वर्णने । निरन्तरं वेदप्रवचनं कुरु । वेदद्रष्टारः परमर्षयस्त्वां निरन्तरमनुगृह्णन्तु' इति । महानयं मे प्रमोदभरः, यत् तेषां माध्वयतिकदम्बगुरूणां मद्विद्यागुरूणां दशमसमाराधनकाले तदनुग्रहप्रेमपाकोऽयं ग्रन्थः, तच्छिष्येण श्रीहृषीकेशतीर्थसंस्थानमधिरूढेण, प्रायो लोकेऽन्यत्राद्दष्टस्य पाण्डित्यसौजन्ययोः सामानाधिकरण्यस्य स्वयमधिष्ठानभूतेन श्रीविद्याधीशतीर्थश्रीचरणेन प्रीत्या प्रकाश्यत इति । अपूर्वां तस्य विद्याप्रियतां स्मारंस्मारमानतशिरोधरः सगौरवं साभिमानं कार्तज्ञ्यमन्तरा किमन्यदर्पयेयम्?

भगवतो नारायणस्य भगवत्पादस्य मध्वस्य चानुग्रहपरम्परा सदा नः सर्वेषां पालनी भूयादित्याशास्योपरम्यते ॥

**रजतपीठपुरम् (उडुपि)** **डा. बन्नञ्जेपदोपाह्वः आचार्यगोविन्दः**
**शा.श. १९३३,**
**खरसंवत्, वै.शु.त्रयोदशी**
[15.4.2011]

२२-७-११



# मन्त्रभूमिका

'अस्य वामस्य- ' (ऋ.सं.१.१६४.१-५२) इतीदमपूर्वं सूक्तं गुह्यभाषामयम् । आचार्यमध्वगदितस्य भाषात्रयस्येदमेकं निदर्शनम् ।

तदिदमाचार्यसमुद्धृतं पुराणवचनं वेदार्थचिन्तनचपलान् सर्वानपि कशाघातेनैव जागरयति-

**त्रिभाषां यो न जानाति रीतीनां शतमेव च ।**
**व्यत्यासादीन् सप्त भेदान् वेदाद्यर्थं तथा वदेत् ।**
**स याति नरकं घोरमन्यथाज्ञानसम्भवम् ॥**

काः शतं रीतय इति न भगवत्पादेन विवृतम् । नापि नः शक्यमवगन्तुम् । शक्यमवगन्तुं तिस्रो भाषाः । शक्यमवगन्तुं व्यत्यासादयः सप्त शैलीभेदाः ।

इमे सप्त शैलीभेदा व्यत्यासादयः- व्यत्यासः, प्रातिलोम्यम्, गोमूत्री, प्रघसः, उक्षणः, सुधुरः, साधु चेति ।

इमाश्च तिस्रो भाषाः- समाधिभाषा, दर्शनभाषा, गुह्यभाषा चेति । अन्यत्र विवृते समाधिभाषा च दर्शनभाषा च । अथ गुह्यभाषायाः समग्रमुदाहरणमिदं सूक्तं दैर्घतमसम् ।

अथाप्यहो बत बहवो व्याख्यातारः स्वयमनधिगतगुह्यार्थाः प्रातीतिकमेवार्थं सूक्तपरमार्थं मन्यमानास्तथैव व्याचक्रुः । तदिदं वेदं व्याख्याय नरकाय सन्नाहो नाम । अतः किञ्चिदिव वैदिकीं गुह्यभाषासरणिं विवृण्वीमहि ।

अस्मिन्नस्यवामीये आदितो गौरीर्मिमायेत्येतदन्तमृग्जातं (१-४१) वैश्वदेवमित्यभिप्रैत्यनुक्रमणीकारः कात्यायनः । तेन विश्वे देवा देवता इति याज्ञिकाः । स्थूलमेतद् दर्शनम् । यतः कात्यायनोऽपि गुह्यभाषामयीमेव प्रायोऽनुक्रमणीमुपचक्रमे ।

तथाहि– विश्व इति वायुः । **'विश्वो वायुः समुद्दिष्टः'** इति स्मरणात् । **'विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः'** इति श्रुतेः । विश्व इति नारायणः । **'विश्वं विष्णुः'** इति स्मरणात् । **'विश्वं नारायणं देवम्'** इति श्रुतेः । विश्वश्च विश्वश्च विश्वौ देवौ प्राणनारायणौ । तयोरिदं सूक्तमिति वैश्वदेवमिति रहस्यम् ।

गौरीर्मिमायेत्येतदन्तमित्यतद्गुणसंविज्ञानम् । तत आरभ्य द्वादशर्चः सरस्वतीभारत्यादिस्तुतिपरा इत्यर्थः ।

सूचितमेतत् पुरैव कात्यायनेन १३९तमसूक्तानुक्रमण्याम्– **'सूक्तप्रयोगे वैश्वदेवत्वम् । सूक्तभेदप्रयोगे यल्लिङ्गं सा देवता'** इति ।

सूक्ष्मतया गवेषणे, यदि न पिहितमन्तश्चक्षुः, आस्वृक्षु प्राणनारायणौ देवते इति स्फुटमवगम्यते । कासुचिदथ त्रिरूपोऽपि प्राणः प्रस्तुतः । तथाहि प्रथमर्च एव तावत् त्रयो भ्रातरः श्रूयन्ते । के ते भ्रातरः? हनुमान् भीमो मध्वश्च । तथाहि प्रथमपादे पलितस्येति पलितरोमा ज्येष्ठो भ्राता वायुतनयेषु हनुमानुच्यते । स किल वामः । अमितं वं बलं ज्ञानं चास्येत्यमितमतिर्मतिनामा । तस्य मध्यमो भ्राता भीमसेनः । स्वयमसहायः सन्नश्नुते व्याप्नोति कौरवपृतनाम्, अष्ट्वा चाश्नाति क्षपयति तामित्यश्नः पृतनाक्षयकृत् पृक्षः । तृतीयो भ्राता मध्व इति स्फुटम्, घृतो दीप्तो भगवान् सदाऽस्य पृष्ठगोपा इति । तदुक्तम्- **'त्राता यस्य त्रिधामा'** इति ।

**'पञ्चपादं पितरं द्वादशाकृतिम्'** (१२) इति च स्फुटं प्राणनारायणयोः स्तुतिः । विवृतं चैतत् सहृदयहृदयङ्गमतया त्रैविक्रमार्यदासेन वामनपण्डितेन षट्प्रश्नभाष्यटीकायाम् ।

२२-७-११



नन्वेवमत्रत्यानि पदानि प्राणनारायणयपरतया बलादानीय तत्ववादिनो व्याचिख्यासन्ति । न तत्र तन्मुखतः प्रतीयते । तत् कथं तत्ववादिनम्मन्यानां वचनेषु श्रद्दधामह इति ।

नन्वद्भुतं भाषसे । स्वगतं चापलं किमपरत्राऽरोपयसि । 'नामानि सर्वाणि' इति प्रमाणप्रमितं सर्वमन्त्राणां नारायणपरत्वमपोह्य बलादानीय जडादिपरताप्रतिपादनचापलं स्वमतदुराग्रहमात्रावलम्बस्यातत्ववादिनस्तवैव, न तत्ववादिनाम् ।

अपिचाद्भुतं ते वादकौशलं यन्मुखतो न प्रतीयत इति । किं न स्मरसि यास्कवचनस्य–**'न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति'** इति । अपिच कथं वा गुह्यभाषामयोऽर्थः मुखतः प्रतीयेत । मा बालिश्यमाविश्य भाषिष्ठाः । किमपि निगूढमिव बभाणेत्येतावदेव मुखतः प्रतीयते । स च निगूढोऽर्थः शास्त्रान्तरसमाख्ययाऽन्वेष्टव्यो भवति । उक्तं हि भागवते- **'परोक्षविषया वेदाः'** इति । श्रुतिरपि स्वयं स्पष्टमाचष्ट- **'परोक्षप्रिया इव हि देवाः'** इति । यदि न लभसे शास्त्रान्तरसमाख्याम्, यदि किमपि न स्फुरति मृत्पिण्डबुद्धेः तर्हि पृच्छ सप्रश्रयं निर्मुक्तदुराग्रहग्राह आतळमवगाढशास्त्रजलधिसमासादिततळगतात्रस्तरळतरतत्वमणिगणप्रभाप्रभावाभादशदिशाधिक्कृततमस्तोमान् सत्तमान् प्रणिपातेन च परिप्रश्नेन च सेवंसेवम्, 'अधीहि भगवो ब्रह्म' इति । ते प्रीता ब्रूयुस्ते गूढमर्थम् ।

एवं स्तुतौ प्राणनारायणौ । अथ 'गौरीर्मिमाय सलिलानि तक्षती' (४१) इति, 'यस्ते स्तनः शशयो यो मयोभूः' (४९) इति च परिस्फुटं सरस्वतीभारत्यावाचार्यान्यौ स्तूयेते । 'चत्वारि वाक्परिमिता पदानि' (४५) इत्याद्याश्च वाचः स्तुतय एव ।

अपि चान्तराळेऽपि पुनः-'त्रयः केशिनः' (४४) इति त्रिषु केशिष्वग्निवाय्वादित्येषु गतौ केशिनौ प्राणनारायणावेव स्तूयेते । प्रसिद्धं हि केशिपदं

मुख्यप्राणे– **‘केशी विषस्य पात्रेण–’** (ऋ.सं.१०.१३६.७) इति । नारायणस्तु केशवः केशवान् केशी । केशौ ब्रह्मरुद्रावस्य स्तो नियम्यतयेति । एवमन्यास्वपि द्रष्टव्यम् । विष्णोः सर्वनामत्वं च स्फुटमुज्जुघोष– **‘इन्द्रं मित्रं वरुणमग्निमाहुः–’** (४६) इत्यादिना ।

अपि चात्र पश्यत गुह्यभाषायाः काञ्चन चमत्कृतिम् । **‘शकमयं धूममारादपश्यम्’** इति त्रिचत्वारिंशीयमृक् । काऽत्र देवता? कात्यायन आह– **‘शकमयमिति शकधूमः’** इति । किमुक्तं भवति? एतस्या ऋचः शकधूमो देवतेत्युक्तं भवति । कात्यायनोऽप्यहो गुह्यभाषयैव व्याहरन् झोन्तस्य झोन्तमेवार्थमाह । कोऽयं शकधूमो नामाश्रुतपूर्वो देवः? यद्देवत्यामिमामृचमाचक्षते । अधिलहरि पारिप्लवं प्लवमानाः स्वादंस्वादमास्वदितलवणैकरसाः प्रातीतिकार्थमात्रप्रवणप्रज्ञाप्रसरा अग्निमुग्धा धूमतान्ताः केचिदविशङ्कमाचक्षते–**‘शकमयं शकृन्मयं शुष्कगोमयसम्भूतं धूममारात् नातिदूरेऽपश्यम्’** इति । अहो एते किल साक्षात्कृतशकमयधूमदेवताः । यस्य यावती प्रज्ञा तस्य तावान् बोधः । तथ्यमाह श्रीहर्षः–**‘यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते’** इति ।

धूमो देवतेति विप्रतिषिद्धं वचनम् । चेतनावती स्तुतिप्रसन्ना फलदात्री हि देवता भवति । अचेतनो धूमः कथं देवता स्यात्? मन्त्राणां जडदेवत्यत्वोपासने दोषश्च श्रूयते–‘अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्’ इति सङ्कर्षणसूत्रम् । ‘देवेषु चर्मादिनामानि संवादादेः’ इति देवमीमांसायाम् । शकशब्दः कथं शकृद्वचनः, कपूयवचनः शकृच्छब्दश्च कथं करीषवचन इति त एव प्रष्टव्याः ।

तदिह कात्यायनवचनस्य निगूढः कश्चनार्थोऽवश्यं वक्तव्य इति स्थितम् । अन्यथा कात्यायनोऽप्यनुपादेयवचनः स्यात् । इदमिह गुह्यार्थमनुसन्धानं भवति– शकमय इति शक्तिमानुच्यते । अथ कोऽयं शक्तिमान् धूमो नाम



निलिम्पः? शृणु सावधानमनाः किम्पचानो मुधा यज्ञेषु–**‘धूत्काराद् धूम उच्यते’** इति च स्म हि स्मरन्ति पुरातनाः शब्दब्रह्मविदः कवयः । तेन यः स्वशक्त्या शत्रून् धूत्करोति निराकरोति स शकमयो धूमः । कोऽसौ यो धूत्कुर्वन् धूम इत्युदितः । पूर्वमन्त्रैः संवादात् प्राणश्च नारायणश्चेति निश्चीयते ।

अपि च त्रिरूपोऽपि प्राणो धूम उच्यते । हनुमान् रावणपृतनां धूञ्चकार । भीमसेनः कौरवपृतनाम् । आचार्यमध्वो मायावादिपृतनाम् । सेयं रुचिरा गुह्यभाषा । सेयं जलधौ निमग्नानामनर्घमणिगणगणना । सेयं तळस्पर्शिता शास्त्रचिन्तनस्य ।

एवमाचार्यस्य पवनस्य, आचार्यान्या भारत्याः, परदेवताया नारायणस्य च स्तुतिनिर्भरमिदं सूक्तं तत्ववादिनां मूलमन्त्रायते । **‘द्वा सुपर्णा सयुजा सखाया’** (२०) इति जीवेशयोर्भेदमनिर्वेदं सडिण्डिमघोषं जुघुषिषदिव सतात्पर्यं स्फुटमारुवत् तत्ववादस्य यशःपटहायत इति शम् ।

[यद्यपीदमथर्ववेदेऽपि नवमकाण्डे सूक्तद्वयात्मना(९-१०) विभज्य पठितम् । नाम चास्य ‘आत्मसूक्तम्’ इति । ब्रह्मण आर्षम् । प्रथमसूक्तं द्वाविंशत्यृचम् । अष्टाविंशत्यृचं द्वितीयम् । अथापि सर्वत्र प्रथितमस्यवामीयं बाह्वृचे पठितं दीर्घतमसा दृष्टमेवेति तदेवात्र समादृतम् ।]

**–आचार्यगोविन्दः**

२२-७-११

११



कृष्णं वन्दे जगद्गुरुम्

१२



प्रणतवान् प्राणिनां प्राणभूतं
प्रणतिभिः प्रीणये पूर्णबोधम् ॥

२२-७-११






२२-७-११







**ॐ ॥ विश्वदेवगतं देवमश्वग्रीवं प्रणम्य तम् ।**
**वैश्वदेवमथो दैर्घतमसं व्याकरिष्यते ॥**

अथातोऽस्यवामीयं व्याख्यास्यामः ।

चतुःषष्ट्युत्तरशततमं सूक्तं प्रथममण्डले । द्विपञ्चाशदृचः । दश वर्गाः । पञ्चर्चो वर्ग आऽष्टमम् । नवमे वर्गे षळृचः । दशमे च । उचथ्यतनयो दीर्घतमा ऋषिः । छन्दांसि प्रतिमन्त्रं वक्ष्यन्ते । बहुलं त्रिष्टुप् । देवता च विश्वदेवान्तर्गतो विश्वरूपो नारायणः । विशेषस्तत्रतत्र निरूप्यते । अत्राऽह शौनको बृहद्देवतायाम्–

'सूक्तं तदस्यवामीयं वैश्वदेवं तदुच्यते ।
'प्रवादा विविधास्तत्र देवानां चानुकीर्तनम्' (४.३१–२) इति ॥

प्रकृष्टास्तत्ववादाः प्रवादाः । प्रकृष्टस्य भगवतो वादाश्च ।

कात्यायनश्चाऽहानुक्रमणिकायाम्– 'अस्य, द्विपञ्चाशत्, अल्पस्तवम्, प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च' इति । स्तुतिप्रचुरं हि बाह्वृच्यम् । इदं त्वल्पस्तवं प्रमेयबहुलं सूक्तमिति विशेषः । किं प्रमेयम्? भगवद्विषयं ज्ञानम्, ज्ञानप्राप्यो मोक्षः, मोक्षदाता ज्ञानगोचरश्च परमाक्षरः परमं ब्रह्म । अत्रर्ग्विधानं विनियोगविशेषमाह–

'स्तेयं कृत्वा द्विजो मोहात् त्रिरात्रोपोषितः शुचिः ।
'सूक्तं जप्त्वाऽस्यवामीयं क्षिप्रं मुच्येत किल्बिषात्'(१.१४.४) इति ॥

**ॐ॥ अस्यवामस्यपलितस्यहोतुस्तस्यभ्रातामद्ध्यमोऽअस्त्यश्नः ।**
**तृतीयोभ्राताघृतपृष्ठोऽअस्यात्रापश्यंविश्पतिंसप्तपुत्रम् ॥ १ ॥**

**अस्य । वामस्य । पलितस्य । होतुः । तस्य । भ्राता । मद्ध्यमः ।**
**अस्ति । अश्नः ॥ तृतीयः । भ्राता । घृत+पृष्ठः । अस्य । अत्र ।**
**अपश्यम् । विश्पतिम् । सप्त+पुत्रम् ॥ १ ॥**

त्रैष्टुभीयमृक् । शची त्रिष्टुब्देवता । 'अस्ति+अश्नः' इति, 'अस्य+अत्र' इति च व्यूहेनाक्षरपूर्तिरिति केवलेयं त्रिष्टुप् । प्राणनारायणौ देवते ।

अस्य अकारवाच्यस्य नारायणस्य । 'अः इति ब्रह्म' इत्यैतरेयी श्रुतिः । वामस्य, वामं सौन्दर्यम्, विशिष्य स्त्रीणाम्, चक्षुषि गतस्य सौन्दर्यनियन्तुर्वामनस्य । सूर्यो हि चक्षुर्मानी । तेन सूर्ये चक्षुषि च गतो भगवानत्रोच्यते । अथ च वमिति बलं ज्ञानं च । अमं अमितं बलं च ज्ञानं चास्येति वाम उच्यते । यथा अमितरमणो राम उच्यते । अथ चोद्गिरति स्वोदरस्थं जगदिति सर्वस्रष्टा च वाम उच्यते । वम उद्गिरणे । पलितस्य सर्वसाधनफलभूतस्य । पल फल निष्पत्तौ । सर्वशास्त्रनिष्पन्नस्य च । सूर्यरश्मयश्च केशा उच्यन्ते । शुभ्रकिरणत्वात् सूर्यः पलित उच्यते । रश्मिगतः हृषीकेशश्च पलितः । अथ भक्तैर्भक्त्या हृदये पालितः पलित उच्यते । भूमेराकृष्य पर्जन्ये रसहोतुः, भूमौ च वृष्टिहोतुः, इन्द्रियाग्निषु विषयहोतुः । सूर्यस्य पुना रूपहोतुश्चक्षुषि । तस्य सूर्यस्थस्य, ततस्य सर्वगतस्य च द्वितीयो भ्राता भर्ता मध्यमः प्राणः । सर्वं जगदश्नुते व्याप्नोतीति अश्नः । अशूङ् व्याप्तौ । यश्चान्ते होतुरङ्गतया जगदश्नुते संहरति च । यश्च प्राणनारायणयोस्तृतीयो भ्राता स घृतपृष्ठोऽग्निः । यत्र घृतेन जुह्वति । तस्य भूर्भुवःस्वःस्थानेषु अग्निवाय्वादित्यगतस्य अस्य पुनरत्रैव स्वहृदये दिव्यं रूपमपश्यम् ।

२२-७-११



बिम्बरूपम् । अस्य नारायणस्य यस्तृतीयो भर्ता तमत्र भूस्थानेऽपश्यमिति वा । कीदृशम्? विश्पतिं प्रजापतिम् । सप्तपुत्रम् । सूर्यरश्मिगतः सप्तभिर्वर्णैः पुनाति जगत् त्रायते च । प्राणगतः आहवादिसप्तवायुगतः । अग्नौ सप्तज्वाला-गतः । सप्तलोकगतः । शरीरे मूलाधारादिसप्तकेन्द्रगतः । सप्तर्षयश्चास्य पुत्राः । 'महर्षयः सप्त पूर्वे मद्भावा मानसा जाताः' इत्युक्तम् । सप्तस्वराश्च साम्नि गीता भगवत्परतया गातारं पुनन्ति त्रायन्ते च ।

अथ चास्य जीवेषु अमितप्रज्ञतया वामस्य, कपिरूपतया वामस्य कुटिलस्य वा । अत एव पाण्डुरलोमतया पलितस्य, भगवता पालितस्य, सदा सर्वनाम-भिर्भगवन्तमेवाऽऽह्वयतः श्रीहनूमतः द्वितीयो भ्राता मध्यमः कौन्तेयो भीमः । उभयोरपि पवनजत्वात् । यश्च कौरवसेनां निःशेषमश्नाति स्म । तृतीयोऽस्य भ्राता घृतपृष्ठः । घृतो भगवान् । सर्वाभीष्टक्षरणात् । प्रकाशरूपत्वाच्च । घृ क्षरणे दीप्तौ च । तं पृष्ठे वहन् वायुवाहनं भगवन्तं घृतपृष्ठो मध्वः । तमेतं त्रिरूपं प्राणमत्र हृदयेऽपश्यम् । सप्तप्राणाः प्रभवन्त्यस्मादिति सप्तपुत्रोऽ-यम् । सप्तमातृभिः पुनाति त्रायते च । 'सप्तशिवासु मातृषु' इति हि पठन्ति । सप्तविद्यामानिन्यो योषण एवमजनयन्तेति चायं सप्तदेवीपुत्रः ॥ १ ॥

**सप्तयुञ्जन्तिरथमेकचक्रमेकोऽअश्वोवहतिसप्तनामा ।**
**त्रिनाभिचक्रमजरमनर्वंयत्रेमाविश्वाभुवनाधितस्थुः ॥ २ ॥**

**सप्त । युञ्जन्ति । रथम् । एक+चक्रम् । एकः । अश्वः । वहति ।**
**सप्त+नामा ॥ त्रि+नाभि । चक्रम् । अजरम् । अनर्वम् । यत्र ।**
**इमा । विश्वा । भुवना । अधि । तस्थुः ॥ २ ॥**

सूर्यनारायणः स्तूयते । आदित्यस्थः शरीरगतश्च प्राणः ।

एककालचक्रं सूर्यरथं सप्तवासराख्या अश्वा वहन्ति । संवत्सरचक्रं सूर्याख्यं नारायणरथं सप्त च्छन्दांस्यश्वरूपाणि वहन्ति । छन्दोमानिन्य इत्येतत् । कास्ताः? गायत्र्याः स्वाहा । उष्णिहः सञ्ज्ञा । अनुष्टुभो रोहिणी ।

बृहत्यास्तारा । पङ्क्तेः मित्रावरुणयोर्भार्ये । त्रिष्टुभः शची । एताः सप्तैव जगत्या इति सप्त देव्यः । एकं प्रधानं चङ्क्रमणाच्चक्रं रतिरूपत्वाद् रथं नारायणं वा युक्ता वहन्ति । वस्तुतस्तु एक एव अश्वो वेदाख्यः गरुडः प्राणो वा । स एव सप्तच्छन्दोनामा । सप्तभिरपि च्छन्दोभिर्नम्यते स्तूयते च । ‘सप्तगणा रथं प्रत्यात्मानं युञ्जन्ति । रथे युक्ता इत्यर्थः । एकोऽश्वो वेदः सप्तच्छन्दोनामा । छन्दोभिमानिनां पृथक्त्वेऽपि वेदमानी सप्तस्वेकोऽस्ति’ इति तत्वप्रदीपे । भूतभवद्भाविभेदेन त्रिनाभि कालचक्रम् । ‘मासचतुष्कैस्त्रिभिस्त्रिनाभि’ इति तत्वपदीपे । अमृतं क्षेममभयमिति त्रिनाभि भगवच्चक्रम् । अजरमनर्वं षड्भावविकाररहितम् । अर्व हिंसायां गतौ च । ‘अनर्वमर्वभ्यो दूरस्थचक्रम्, अर्वन्तो मेरुमानसोत्तरमध्याकाशगताः’ इति तत्वप्रदीपे । यत्र कालाख्ये परमात्मनि । वायुपक्षे प्राणचक्रं रथं शरीरम् । सप्त प्राणा युञ्जन्ति । वस्तुतस्तु सप्त प्राणनामा आशु वानाद् गतेरश्वो मुख्यवायुरेव । अवतारत्रयनाभि । यत्र वायौ ॥ २ ॥

**इमंरथमधियेसप्ततस्थुस्सप्तचक्रंसप्तवहन्त्यश्वाः ।**
**सप्तस्वसारोऽअभिसन्नवन्तेयत्रगवान्निहितासप्तनाम ॥ ३ ॥**

**इमम् । रथम् । अधि । ये । सप्त । तस्थुः । सप्त+चक्रम् । सप्त । वहन्ति । अश्वाः ॥ सप्त । स्वसारः । अभि । सम् । नवन्ते । यत्र । गवाम् । नि+हिता । सप्त । नाम ॥ ३ ॥**

द्वितीयचरणे ‘वहन्ति+अश्वाः’ इति व्यूहेनैकादशाक्षरता । प्राणनारायणौ स्तूयेते ।

इमं रथं शरीराख्यं ये सप्त प्राणा अधि तस्थुस्ते । ‘शरीरं रथमेव च’ इति, ‘सप्त प्राणाः प्रभवन्ति तस्मात्’ इति च श्रवणात् । चक्रमिति पाद उच्यते । सप्तचक्रं सप्तपादपरिमितम् । पञ्च ज्ञानेन्द्रियाणि मनोबुद्धी चेति सप्ताश्वा भूत्वा वहन्ति । ‘इन्द्रियाणि हयानाहुः’ इति श्रवणात् । ता एवेन्द्रिय-

२२-७-११



देवताः स्वतन्त्रं भगवन्तं सरन्ति सारयन्ति चेति सप्त स्वसार उच्यन्ते । अभितः सन्नवन्ते स्तुवन्ति । यत्र यासु देवतासु, गवां सप्त नामानि निहितानि । चत्वारो वेदा इतिहासद्वयं पुराणानि च । अन्ततः सर्वाणि भगवन्नामैवेत्यनेनाऽह ।

इमं प्राणाख्यं नारायणरथं सप्तच्छन्दोमानिन्यः, सप्तेन्द्रियमानिन्यश्चोपतस्थिरे । सप्तभिर्मातृभिः क्रममाणं ते सप्त अश्वभूता वहन्ति । मातर एव स्वसरणात् स्वसारोऽभवन् । अथ च मूलाधारादयः सप्त स्वसारः संनवन्ते सङ्गच्छन्ते । गवां जलधीनां सप्त नामानि यत्र निहितानि । मूलाधारो लवणोदधिरित्यादि ।

इमं नारायणाख्यं रमणाद् रथं सप्त देवाः अधितस्थुः । ‘सप्ताक्षितय उपतिष्ठन्ते’ इति श्रवणात् । के सप्ताक्षितयो रथक्षितयः? रुद्रः पर्जन्य आदित्योऽग्निरिन्द्रः द्यावापृथिव्यौ च । अथ च सप्तर्षयः– गौतमः, भरद्वाजः, विश्वामित्रः, जमदग्निः, वसिष्ठः, कश्यपः, अत्रिरिति । महर्षयः सप्त पूर्वे वा मरीच्याद्याः । सप्तसु लोकेषु, मातृषु, नाडीचक्रेषु च गतम् । सप्तच्छन्दांसि वहन्ति । सप्त मातरः स्वसारः । अभि संस्तुवन्ति । सप्त महानद्यो वा एनमुद्दिश्य अभि सं स्रवन्ति । यत्र गवां वाचां सप्त विभक्तयोऽपि नामतयाऽन्विताः । सप्त स्वरा वा ॥ ३ ॥

**कोददर्शप्रथमञ्जायमानमस्थन्वन्तंयदनस्थाबिभर्त्ति ।**
**भूम्याअसुरसृंगात्माक्कस्वित्कोविद्वांसमुपंगात्प्रष्टुमेतत् ॥ ४ ॥**

**कः । ददर्श । प्रथमम् । जायमानम् । अस्थन्+वन्तम् । यत् । अनस्था । बिभर्त्ति ॥ भूम्याः । असुः । असृक् । आत्मा । क्व । स्वित् । कः । विद्वांसम् । उप । गात् । प्रष्टुम् । एतत् ॥ ४ ॥**

तृतीयचरणे ‘कुव स्वित्’ इति व्यूहेन छन्दःपूर्तिः । आदित्यो ब्रह्मा प्राणः लक्ष्मीनारायणौ च देवताः ।

इतः परं केचन प्रतिवचनगर्भा अध्यात्मप्रश्ना भवन्ति । यदाह कात्यायनः– 'संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र' भवन्तीति ।

को ददर्श प्रथमं वासुदेवाद्यात्मना जायमानम् । भगवतो वा नाभिकमले प्रथमं जायमानम् । प्रथमं जायमानमादित्यं वा । विश्वं वा जायमानं को ददर्श? चतुर्मुखो ददर्श । अस्थिप्रचुरभौतिकशरीरवन्तं ब्रह्मादिजीवगणमनस्था अप्राकृतो भगवान् बिभर्ति । चित्प्रकृतिर्वा । अने प्राणे वा स्थिता प्रकृतिः । भगवन्मूर्तिश्च । भूम्याः प्रकृतेरप्यसुः प्रेरकः । यद्यपि प्रकृतेरप्यक्षरत्वात् तां न सृजति । अतः असृक् । अथाप्यन्तरात्मा सन् तामपि प्रेरयति । अथच भूमिगतस्य भूतजातस्य असुः प्रेरकः प्राणः । असृगात्मा रक्तवर्णः । उद्यद्रविसन्निभः । तादृशः क्व स्वित् वर्तते । एतत्प्रष्टुम्, पृष्ट्वा ज्ञातुम्, को वा कं वा विद्वांसमुपगच्छेत्? प्रष्टा वक्ता वा दुर्लभ इत्येतत् ॥ ४ ॥

**पाकः॑पृच्छामि॒मन॒साविंजानन्दे॒वाना॑मे॒नानिहि॑तापदानि॑ ।**
**व॒त्सेब॒ष्कयेधि॑स॒प्ततन्तू॒न्विते॑त्निरेक॒वय॒ऽओत॒वाऽउ॑ ॥ ५ ॥**

**पाकः॑ । पृ॒च्छामि॒ । मन॑सा । अवि॑+जानन् । दे॒वाना॑म् । ए॒ना । नि+हि॑ता । प॒दानि॑ ॥ व॒त्से । ब॒ष्कये॑ । अधि॑ । स॒प्त । तन्तू॑न् । वि । त॒त्नि॒रे । क॒वयः॑ । ओत॒वै । ऊँ॒इति॑ ॥ ५ ॥ १ ॥**

'बष्कये+अधि' इति व्यूहेनाक्षरपूर्तिः । देवाः प्राणनारायणौ च स्तूयन्ते ।

अपक्वः अत एव पाकयोग्यः पृच्छामि । मनसा मननेनापि एतद्गुह्यमविजानन् । देवानां भगवद्रूपाणां वासुदेवादीनाम् । ब्रह्मादीनां च एतानि ज्ञानिगदितानि पदानि स्थानानि, स्वरूपाणि च अधिलोकं क्व निहितानि? अध्यात्मं च । बष्कयः एकहायनो वत्सः संवत्सरः । सप्तसंस्थान् मखान् सप्तशास्त्राणि सप्तेन्द्रियाणि च कवयो वितेनिरे । ज्ञानस्योततायै । उ एव । वत्से जगन्निवासे भगवति । गोवत्सरूपे प्राणे वा । उभावपि यथायोग्यं

२२-७-११



बष्कयौ । इच्छारूपत्वाद् बः । चेष्टकत्वात् षः । 'षकारः प्राण आत्मा' इति श्रुतेः । सुखरूपत्वात् सर्वकर्तृत्वाद्वा कः । ज्ञानरूपत्वात् सर्वगतत्वाच्च यः । तस्मिन्नेवाधिकतया वितेनिरे ॥ ५ ॥ १ ॥

**॥ इति प्रथमो वर्ग्गः ॥**

**अचि॑कित्वाञ्चिकि॒तुष॑श्चि॒दत्र॑क॒वीन्पृ॑च्छामिवि॒द्मने॒नवि॒द्वान् ।**
**वियस्त॒स्तम्भ॒षळि॒मारजां॑स्यजस्य॑रू॒पेकिमपि॑स्वि॒देक॑म् ॥ ६ ॥**

**अचि॑कित्वान् । चि॒कि॒तुषः॑ । चि॒त् । अत्र॑ । क॒वीन् । पृ॒च्छा॒मि॒ । वि॒द्मने॑ । न । वि॒द्वान् ॥ वि । यः । त॒स्तम्भ॑ । षट् । इ॒मा । रजां॑सि । अ॒जस्य॑ । रू॒पे । किम् । अपि॑ । स्वि॒त् । एक॑म् ॥ ६ ॥**

तृतीयतुरीयचरणयोर्विश्लेषेण 'रजांसि+अजस्य' इति छन्दःपूर्तिः । सर्वस्रष्टा नारायणः स्तूयते । स्वयमचिकित्वानजानन्नेवाहं येकेचिदत्र विषये चिकित्वांसस्तान् चिकितुषः विदुषः कवीन् तत्रापि विशेषज्ञान् पृच्छामि । तदपि विद्मने ज्ञानाय । न स्वयं विद्वान् पाण्डित्यख्यापनाय परेषां पराभावनाय वा । किं तत् प्रष्टव्यम्? इमानि भुव आरभ्य सत्यलोकपर्यन्तानि उपरितनानि षड् रजांसि लोकान् यः वितस्तम्भ । ष्टभि स्थापने । विविधं स्थापयामास । तस्याजस्य रूपे अनन्तगुणेषु रूपेषु किञ्चिदेकं रूपम्, कञ्चिदेकं च गुणं ब्रवीत्विति पृच्छामि ॥ ६ ॥

**इ॒हब्र॑वीतु॒यऽईम॒ङ्गवे॒दास्यवा॒मस्य॒निहि॑तम्प॒दंवेः ।**
**शी॒र्ष्णःक्षी॒रन्दु॑ह्रते॒गावो॑ऽअस्यव॒व्रिंवसा॑नाऽउद॒कम्प॒दापुः ॥ ७ ॥**

**इ॒ह । ब्र॒वी॒तु॒ । यः । ईम् । अ॒ङ्ग । वेद॑ । अ॒स्य । वा॒मस्य॑ । नि+हि॑तम् । प॒दम् । वेरिति॒ वेः ॥ शी॒र्ष्णः । क्षी॒रम् । दु॒ह्र॒ते । गाव॑ः । अ॒स्य । व॒व्रिम् । वसा॑नाः । उ॒द॒कम् । प॒दा । अ॒पुः ॥ ७ ॥**

वेद+अस्य इति व्यूहेनाक्षरपूर्तिः । सूर्यगतो नारायणः स्तूयते ।

यदि कश्चिद् वेत्ति य ईं य एव वेत्ति स इह ब्रवीतु । हे अङ्ग, त्वं जानासि चेत् त्वं ब्रूहीति ज्ञानिवर्गमुल्लाघयति । इह मन्निकटे । किम्? वेः सर्वगतस्य, सर्वस्रष्टुः, सत्यसङ्कल्पस्य, सर्वप्रेरकस्य सर्वात्तुर्भगवतः पदं स्वरूपम् । अस्य वामस्य वेः विष्णोः पदम् । अस्मास्वेवान्तर्निहितम् । सूर्यमण्डले च निहितम् । अस्य गावो रश्मयः शीर्ष्णः उन्नतादाकाशात् क्षीरं जलं वर्षणेन दुहन्ति । वव्रिं प्रकाशं वसानाः पदा किरणव्रजेन उदकं पपुः । अस्य विष्णोर्गावो वेदवाचः शीर्ष्णः शिरः स्थितान्मनोनियामकात् तत एवार्थाख्यं पयो दुहन्ते । अस्य पदा मन्त्रवर्णेन वव्रिं वसाना ज्ञानिनः, उदानां जीवानां कं सुखं यस्मात् तादृशमर्थरसं अपुः पालयामासुरिति च ॥ ७ ॥

**मातापितरमृतऽआबभाजधीत्यग्रेमनसासंहिजग्मे ।**
**साबीभत्सुर्गर्भरसानिविद्धानमस्वन्तऽइदुपवाकमीयुः ॥ ८ ॥**

**माता । पितरम् । ऋते । आ । बभाज । धीती । अग्रे । मनसा । सम् । हि । जग्मे ॥ सा । बीभत्सुः । गर्भ+रसा । नि+विद्धा । नमस्वन्तः । इत् । उप+वाकम् । ईयुः ॥ ८ ॥**

अत्र 'धीतियग्रे' इति व्यूहेन छन्दःपूर्तिः । प्राणनारायणौ स्तूयेते ॥

पृथिवी जगत्पितरं सूर्यनारायणं धीती धीत्या हविरादिकर्मणा आ सेवते स्म । ऋते सस्योत्पादनार्थम् । 'ऋतमुञ्छसिलम्' इति स्मरणात् । पिताऽप्यग्रे प्रीत्या वर्षणेन सङ्गतो बभूव । सा गर्भे गृहीतवृष्टयाख्यवीर्यरसा बीभत्सुर्गर्भबन्धनेच्छावती नितरां गर्भरसेन विद्धा । तेन नमस्वन्तो जनाः 'अद्य कामायान्नं भविष्यति' इति उपपन्नं वाग्व्याहारमीयुः ॥

वेदमाता, 'वाचो मा मातरः' इति स्मरणात् । ऋते ज्ञानप्रसवार्थं जगत्पितरमा बभाज प्राणं नारायणं वा । धीत्या यज्ञकर्मणा । मनसा मननकर्मणा च

२२-७-११



स्वबोधितेन सङ्गता बभूव । सा संसारात् बीभत्समाना भगवद्गुणरसगर्भा तत्रैव नितरां विद्धा लग्ना बभूव । तेन वेदज्ञाः भगवति नमनवन्तः उपपन्नं स्तुतिवाकमीयुः ॥ ८ ॥

**युक्तामातासीद्धुरिदक्षिणायाऽअतिष्ठद्गर्भोवृजनीष्वन्तः ।**
**अमीमेद्वत्सोऽअनुगामपश्यद्विश्वरूप्यन्त्रिषुयोजनेषु ॥ ९ ॥**

**युक्ता । माता । आसीत् । धुरि । दक्षिणायाः । अतिष्ठत् । गर्भः । वृजनीषु । अन्तरिति ॥ अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् । विश्व+रूप्यम् । त्रिषु । योजनेषु ॥ ९ ॥**

'वृजनीषु+अन्तः' इति, 'विश्वरूपियम्' इति चाक्षरपूर्तिः । प्राणनारायणौ स्तूयेते ।

पुत्रोत्पादनदक्षायाः स्त्रिया धुरि युक्ता, दक्षायां धुरि वा । 'सुपां सुपो भवन्तीति वक्तव्यम्' इति वार्तिकम् (७.१.३९) । 'धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते' इति वामनः । वेदमाताऽऽसीत् । परमाक्षराख्यं वत्समभिव्यञ्ज-यन्ती । तस्यामयं गर्भोऽतिष्ठत् । 'गर्भ इव निभृतो गर्भिणीषु' इति हि पठन्ति । वृजनीषु आच्छादिकासु गायत्र्यादिष्वन्तः । वर्जनीयासु वा आपातप्रतीतिषु । उल्बानीव तानि भवन्ति । अन्तर्गर्भो भवति । वत्सः कश्चन वेदमातुरुपासकः वायुर्वा गामपश्यत् मातरम् । कथम्? त्रिषु अर्थयोजनेष्वपि विश्वं परमात्मानं रूपयन्तीम् । दृष्ट्वा च मातुः समीपममीमेद् गच्छति । गत्वा च मातरं शब्दापयति– ममापि भगवद्गुणपयः पाययेति । 'मीमृ गतौ शब्दे च' । अथ कश्चिद् वत्सस्थानीयः साधकः । पितरं गामिव वृषभं पुरुषवृषभं वायुमपश्यत् । त्रिषु योजनेषु भगवद्योगवत्स्ववतारेषु च विश्वरूप्यं परमात्मानं रूपयन्तमपश्यत् । तदनुगुणतया अमीमेत् तुष्टाव भगवन्तम् । 'तं माता रेळ्हि स उ रेळ्हि मातरम्' इत्यामनन्ति हि ॥ ९ ॥

**तिस्रोमातॄस्त्रीन्पितॄन्बिभ्रदेकऽऊर्ध्वस्तस्थौनेमवग्लापयन्ति ।**
**मन्त्रयन्तेदिवोऽअमुष्यपृष्ठेविश्वविदंवाचमविश्वमिन्वाम् ॥**

**॥ १० ॥**

**तिस्रः । मातॄः । त्रीन् । पितॄन् । बिभ्रत् । एकः । ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्ति ॥ मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे । विश्व+विदम् । वाचम् । अविश्व+मिन्वाम् ॥ १० ॥ २ ॥**

त्रिस्थानगौ त्रिप्रतीकौ प्राणनारायणौ स्तूयेते ॥

तिस्रो मातरः त्रयो लोकाः । भूर्भुवःस्वःस्थानानि । मीयते भगवानत्रेति । त्रयः पितरः पातारः अग्निवाय्वादित्याः । एक एतान् नारायणो बिभर्ति प्राणो वा । य ऊर्ध्वः सर्वाधिकस्तस्थौ । 'ऊर्ध्वमूलोऽवाक्शाखः' इति हि पठन्ति । न तं केऽपि ग्लपयन्ति । यतः स्वयमवराः । अवज्ञाय वा ग्लप-यन्ति । सर्वथा अशक्तिं दीर्घेणाऽह । 'संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्' इति च ऋग्भाष्ये । 'ग्लै हर्षक्षये' इत्यतो णौ चत्वारि रूपाणि भवन्ति, ग्लपयति । ग्लपयते । ग्लापयति ग्लापयते । अतोऽर्थभेदसूचनायैव प्रतृण्णे दीर्घलोपः । दिवः पृष्ठे वैकुण्ठे गतस्य अमुष्य वाचं वेदलक्षणाम् । दिवः पृष्ठे वैकुण्ठे गता अपि, सत्यलोके वा गताः मन्त्रयन्ते अर्थपर्यालोचनेन परस्परं भाषन्ते । कीदृशीं वाचम्? विश्वं नारायणं वेदयतीति, विन्दतीति वा । नारा-यणस्य पूर्णत्ववादिनीम् । अथापि अविश्वमिन्वाम् । विश्वं पूर्णं यथा तथा न मिनोतीति तादृशीम् । 'यतो वाचो निवर्तन्ते', 'न वाग् गच्छति' इत्यादेः ॥ १० ॥ २ ॥

**॥ इति द्वितीयो वर्ग्गः ॥**

२२-७-११



**द्वादशारन्नहितज्जरायवर्वर्त्तिचक्रम्परिद्यामृतस्य ।**
**आपुत्राऽअग्नेमिथुनासोऽअत्रसप्तशतानिविंशतिश्चतस्थुः ॥ ११ ॥**

**द्वादश+अरम् । नहि । तत् । जराय । वर्वर्त्ति । चक्रम् । परि । द्याम् । ऋतस्य ॥ आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥ ११ ॥**

'दुवादशारम्' इति क्षैप्रविश्लेषेण छन्दःपूर्तिः । अग्निः सूर्यः प्राणो नारायणश्च देवताः ।

द्यां द्योतमानं जीवज्योतिः परितः चक्रवदावृतं चङ्क्रमणशीलं च लिङ्गशरीरं, अनिरुद्धशरीरं च । कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्च मनोबुद्धी एकादशद्वादशे । ऋतस्य सुकृतस्य फलमेतत् । ऋतस्य नारायणस्य वाऽधिष्ठानम् । 'पुरमेकादशद्वारमजस्यावक्रचेतसः' इति श्रवणात् । आ परि वर्वर्ति पुनःपुनः परिवर्तते जन्मान्तरलाभाय । अथापि तल्लिङ्गशरीरं अनिरुद्धशरीरं च न जरणाय भवति । न जीर्यति । एकमालयम् । एकमामुक्ति ।

स्वरूपशरीरं च ऋतस्य यथार्थज्ञानरूपस्य नारायणस्य परितो द्यां परि-ज्ञानमुद्दिश्य वर्तते । न हि तत् कदाऽपि जरणाय ।

स्थूलशरीरमपि यावदग्निः परितः वर्तयति तावन्न जीर्यति । यावद् भुक्तं जीर्यति तावच्चक्रं न जीर्यति । क्रमेण भुक्तं न जीर्यति । शरीरं क्रमेण जीर्यति ।

एवमग्निः स्तूयते 'हे अग्ने' इति सश्रद्धं सम्बोध्य । कोऽग्निः? प्रसिद्धाग्निरेवाग्निः प्रथमम् । ततः सूर्यः । ततोऽन्तरङ्गप्रयाणे प्राणाग्निः । ततोऽपि मूलान्वेषणे नारायण एवाग्निः । कथमग्निः । अत्ति भुक्तम् । अत्ति हुतम् । अत्त्यायुः । अत्ति विश्वम् । अग्र्यत्वाच्चाग्निः । अग्रे नयतीति च । अङ्गानि नयतीति, अगानि नयतीति । अकारवाच्यश्च । सर्वगतश्च । सर्वनेता च सर्वज्ञश्च ।

अथचाऽदित्यः । ऋतस्य कालस्य नारायणस्य वा चक्रं परिवर्तयति । द्वादशमासारम् । न हि कालः कदाऽपि जीर्यति । अथ ऋतस्य नारायणस्य द्वादशसु मासेषु चङ्क्रमणाच्चक्रं स्वरूपं द्वादशनामभिः केशवादिभिरर्यत इति द्वादशारम् । प्राणोऽपि तथा । द्वादशस्विन्द्रियेषु मासेषु च स्थितः ।

ननु स्वरूपशरीरं कथं द्वादशारम्? किं तत्र पायुना प्रयोजनम् । ज्ञानानन्दमये शरीरे विसर्जनीयस्य मलस्यैवाभावात्? सत्यं नवैवेन्द्रियाणि । मनोबुद्धी दशमैकादशे । अहंस्मृतिर्द्वादशमिन्द्रियम् । अभिमानपूर्वं स्मरणमित्येतत् । महतः अहङ्कार एवान्तर्भाव इति गीताभाष्यम् । तेन तदपि द्वादशोऽरः । अथच श्रोत्रे नेत्रे नासापुटे च द्वेद्वे, वाक्, रसना, द्वौद्वौ हस्तौ च पादौ चेति द्वादशारम् । सप्त शतानि विंशतिश्च मिथुनासः स्त्रीपुंसात्मानः पुत्र्यश्च पुत्राश्च अत्र चक्रे तस्थुः । नारायणप्राणयोः अस्थिगतानि, मज्जागतानि च तावन्ति रूपाणि । अहोरात्राणि च तावन्ति वत्सरचक्रस्य । तास्वग्निः आदित्यः प्राणनारायणौ च ॥ ११ ॥

**प॒ञ्च॑पादम्पि॒तर॒न्द्वाद॑शाकृतिन्दि॒वऽआ॑हुः॒परे॒ऽअर्द्धे॑पुरी॒षिण॑म् ।**
**अथे॒मेऽअ॒न्यऽउप॑रेविचक्ष॒णंस॒प्तच॑क्रे॒षळ॑रऽआहु॒रर्प्पि॑तम् ॥ १२ ॥**

**पञ्च॑+पादम् । पि॒तर॑म् । द्वाद॑श+आकृतिम् । दि॒वः । आ॒हुः॒ । परे॑ । अर्द्धे॑ । पु॒री॒षिण॑म् ॥ अथ॑ । इ॒मे । अ॒न्ये । उप॑रे । वि॒+च॒क्ष॒णम् । स॒प्त+च॑क्रे । षट्+अ॑रे । आ॒हु॒ः । अ॒र्प्पि॑तम् ॥ १२ ॥**

अत्र जगती छन्दः । सूर्यः प्राणो नारायणः ।

संवत्सरो वै प्रजापतिः । संवत्सरस्थो नारायणः । तं पञ्चपादमाहुः । वासुदेवादयः पञ्च मूर्तयः पञ्चर्तुगताः । 'द्वादशमासाः पञ्चर्तवः –' इति श्रुतेः । हेमन्तशिशिरयोर्धर्मसामान्यादैक्येनर्तूनां पञ्चत्वम् । हिमं तनोतीति हेमन्तः । शीतेन शृणातीति शिशिरः । स पातीति पिता च । यो नः पिता जनिता । द्वादशमासस्थाः केशवाद्या द्वादशाकृतयः ॥

२२-७-११



वायुरपि प्राणापानादिपञ्चपादः । उत्तमानां स्वरूपं तु पादशब्देन भण्यते । इन्द्रियगतद्वादशाकृतिः ।

दिवः द्युलोकात् परे दूरस्थे ततोऽप्युत्कृष्टे आ+ऋद्धे नित्यलोके स्वपुर्यां सीदतीति पुरीषिणमाहुर्वेदज्ञाः । अथ दिवः सकाशात्, सरस्वत्या अनुग्रहात् लब्धात् दिवः ज्ञानात्, परे उत्कृष्टे चेतने साधनैर्भक्त्यादिभिः आ+ऋद्धे परिपूर्णे सति तस्मै पुरं वैकुण्ठपुरमिच्छतीति पुरीषी । इषु इच्छायाम् । तादृशमाहुरौपनिषदाः ।

परे पुण्यकृत्त्वादुत्तमेऽपरस्मिन् पुरुषे दिवः द्युलोकात् आऋद्धे ईषद् भोगर्द्धे । तस्य पुनः कर्मपूर्त्यै पुरं भोगशरीरं दातुमिच्छन्तमाहुः ।

वायुः पञ्चात्मा द्वादशाकृतिः शेषादिपिता, तं जीवजातस्य पुरे नियन्तुं सीदन्तं निषण्णं द्युदेव्याः परे अर्धे दक्षभागे स्थितमाहुः प्राणवादिनः ।

सूर्यः । तपतीति पिता । तमेनं तापिनं सन्तं पितरमाहुः परोक्षेण । पचि विस्तारे । पञ्चपादं दिगन्तविस्तृतरश्मिम् । पञ्चन्त इति पञ्चाः पादाः किरणा अस्य । पचि व्यक्तीकरणे इत्येके । पञ्चास्य इति यथा । दिवः परेऽर्धे उत्तरायणे उत्तरभागे दक्षिणायने दक्षिणभागे गगनमध्ये पुनरीषिणमाहुः । पुनरीषिणं सन्तं पुरीषिणमाहुर्ज्योतिर्वेदिनः । पुनःपुनरुदेष्यन्तमाहुः । पुनरिष्यतीति पुरीषी । इष गतौ । प्राच्यादिदिक्षूर्ध्वं च वितता अस्य रश्मय इति च पञ्चरश्मिः ।

पञ्चद्वादशरूपिणं षष्टिसंवत्सरगतं च नारायणम् । इदमुपलक्षणम् । अनन्तरूपिणम् । पितरं ब्रह्मवाय्वोः साक्षात् । सर्वेषामपि परम्परया । 'ब्रह्मणः पितरं वन्दे शङ्करस्य पितामहम्' । परे परायुषि द्यौः ज्ञानं कर्म वा ताभ्यां पूर्णे सति चतुर्मुखे स्वपुरे स्वशरीर एव इषमन्नं ददतमाहुर्वेदान्तिनः । पुरीषं जलं च लोकस्य वृष्टिद्वारा ददतमाहुः ।

अथेमे अन्येऽध्यात्मोपासकाः शतर्चिनः विचक्षणं उपरे उपरमन्त्यत्रेति, समीपस्थं रमणस्थानं चेति वा शरीरे, अर्पितमाहुः । नियामकत्वेन स्थितम् । ध्यानेन वा निहितम् । सप्तधातुसमुदायत्वात् सप्तचक्रम् । सप्तपादायामत्वाच्च । न्यग्रोधपरिमण्डलत्वादित्येतत् । चङ्क्रमण-साधनत्वाच्चक्रशब्दितं पदम् । पादौ हस्तौ मध्यं शिरश्चेति षळङ्गत्वात् षडरम् । मनसा सह पञ्च ज्ञानेन्द्रियाणि वा षडराः ।

अथ चेमे अन्ये विद्वांसः सप्तविद्यासमुदाये इमं वाच्यतया निहितमाहुः । 'सप्तशिवासु मातृषु' इति श्रूयते । वेदाश्चत्वारः भारतं रामायणं पञ्चरात्रमिति सप्त मातरः । शीक्षाद्यानि षडङ्गानि षडराः । एवं सर्वविद्यावेद्यमाहुः ।

षड्भावविकारा वा षडराः । सप्तच्छन्दसां वा चक्रम् । सप्तचक्रे सप्तलोकात्मके षड्भावविकृते ब्रह्माण्डे चार्पितमाहुः ॥ १२ ॥

**पञ्चारेचक्रेपरिवर्त्तमानेतस्मिन्नातस्थुर्भुवनानिविश्वा ।**
**तस्यनाक्षस्तप्यतेभूरिभारस्सनादेवनशीर्य्यतेसनाभिः ॥ १३ ॥**

**पञ्च+अरे । चक्रे । परि+वर्त्तमाने । तस्मिन् । आ । तस्थुः । भुवनानि । विश्वा ॥ तस्य । न । अक्षः । तप्यते । भूरि+भारः । सनात् । एव । न । शीर्य्यते । स+नाभिः ॥ १३ ॥**

त्रिष्टुबेव । प्राणः प्रकृतिर्नारायणश्च ।

पञ्चऋत्वात्मके कालचक्रे, पञ्चभूतात्मके वा विश्वचक्रे, शरीरे वा, चङ्क्रम्यते सर्वमनेनेति चक्रे नारायणे पञ्चात्मके तदनु प्राणे पञ्चात्मके । परिवर्तनं परिभ्रमणं कालभूतयोः । प्राणनारायणयोः परितो व्याप्य वर्तनम् । रक्षणार्थं वर्तनं परिवर्तनम् । प्रवृत्त्यर्थं वर्तनं परिवर्तनम् । तस्मिन् कालचक्रे त्रिवृत्कृते भूतचक्रे वा विश्वानि भुवनानि आ स्थितानि । शरीरे जीवजातं च । सर्वं च नारायणे प्राणे च । पञ्चसंवत्सरमयं वा चक्रं पञ्चारम् । वत्सरः संवत्सरः

२२-७-११



अनुवत्सरः इडावत्सरः परिवत्सर इति । चक्रं रथेन संयोजयन् दारुदण्डः अक्ष इत्युच्यते । अत्र चिदचित्प्रकृती । चक्रस्य निरन्तरभ्रमणवेगेनाक्षे तापो जायते । अयमक्षो न तप्यते न तापयुक्तो भवति । न श्राम्यति नापि विश्राम्यति भूरिभारवहनेऽपि । भगवता अधिष्ठितत्वात् । न क्षरतीत्यक्षरमुच्यते । न क्षीयत इत्यक्षम् । पुंवद्भावश्च कूटस्थोऽक्षर इतिवत् । सनादेव सनातन एव । 'वायुरनिलममृतम्' इति श्रुतेः । नाभिः प्राणः । सनाभिः अक्षः । 'अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्' इति प्रश्ने । प्राणोऽपि भगवन्निलयत्वात्सनातन एव सन् न शीर्यत आकल्पान्तप्रळयम् । स नाभिः इति भिन्ने वा पदे । भगवता प्रथमसृष्टः प्रथमपुत्र इति तच्छब्दार्थः ॥ १३ ॥

**सनेमिचक्रमजरंविवावृतऽउत्तानायान्दशयुक्तावहन्ति ।**
**सूर्य्यस्यचक्षूरजसैत्यावृतन्तस्मिन्नार्प्पिताभुवनानिविश्वा ॥**
**॥ १४ ॥**

**स+नेमि । चक्रम् । अजरम् । वि । ववृते । उत्तानायाम् । दश । युक्ताः । वहन्ति ॥ सूर्य्यस्य । चक्षुः । रजसा । एति । आ+वृतम् । तस्मिन् । आर्प्पिता । भुवनानि । विश्वा ॥ १४ ॥**

अत्र प्रथमपादे द्वादशाक्षराणीति एकाक्षराधिका भुरिक् त्रिष्टुबियं भवति । अथवा उत्तरार्धेऽक्षरव्यूहेन निचृज्जगती– 'रजसैति+आवृतम्' इति । 'भुवनानि विशुवा' इति । आदित्यः प्राणो नारायणः ।

अजरं कालचक्रं कालनियामको नरायणो वा । 'कालोऽस्मि लोकक्षयकृत्' इति स्ववचनात् । विववृते विपरिवर्तते । विशिष्टं वा वर्तते । वर्तने स्वातन्त्र्यरूपमाधिक्यं द्योतयितुं संहितायां वावृत इति दीर्घम् ।

विश्वं नेमिना परिधिस्थानीयेन प्राणिजातेन सहितम् । नियम्यतया । प्राणो हि नाभिः । तेन प्राणिनो नेमय इति स्फुटम् । अहोरात्राणि वा नेमिः ।

उत्तानायां ऊर्ध्वतनायां दिवि स्थिता भगवता नियुक्ता दश दिगधीशा इन्द्रादयः । जगद् वहन्ति । इन्द्राग्नी, यमनिरृती, वरुणवायू, कुबेरेशानौ, शेषमित्रौ, गरुडकामौ सभार्या इति चतुर्विंशतिर्दशदिगधिपा भवन्ति । अथच उत्तानायां उत्कृष्टायां भूमौ दश भगवदवतारा भवन्ति । दशेति सर्व-मुद्दिष्टम् । तेनानन्तावतारग्रहणम् । ज्ञानिनां हृदि युक्ताः । सर्वैर्गुणै-र्युक्ताः । लीलायुक्ताः ।

सूर्यस्य सूरिगम्यस्य नारायणस्य प्राणस्य च चक्षुःस्थानीयं मण्डलम् । 'देवो याति भुवनानि पश्यन्' इति श्रवणात् । रजसा । रजांसि लोकाः । भूर्भुवःसुवराख्येन रजसा परिगतं सूर्यस्य चक्षुः विश्वप्रकाशनार्थमेति । 'चक्षोः सूर्यो अजायत' इति श्रवणात् सूर्यस्य उत्पत्तिस्थानं नारायणो मण्डलगत एति । उदकं रज इति यास्कः । वृष्ट्युदकेन वा सहैति । 'आदित्याज्जायते वृष्टिः' इति स्मरणात् । तस्मिन् आदित्ये प्राणे नारायणे च विश्वानि भुवनानि आ सर्वात्मना अर्पितानि । 'आ अर्पिता' इत्यपि प्रतृण्णं स्यात् ।

अथाध्यात्मम् । चक्रं शरीराख्यम् । चङ्क्रम्यन्ते चरन्त्यनेनेत्येव । नेमिस्था-नीयं जीवजातम् । उत्तानायां साधनभूमौ दश प्राणा वहन्ति । दशेन्द्रियाणि वहन्ति । सूर्यस्य नियम्यं चक्षुः रजोगुणेनावृतं भ्रमति सत्यदर्शनार्थमसमर्थं सत् । रजसाऽवृतमिवास्फुटम् । 'नीहारेण प्रावृताः' इत्यन्यत्र । तमसोऽ-प्युपलक्षणम् । तमसाऽऽवृतं चक्षुर्न पश्यत्येवेति नोक्तम् । रजसाऽऽवृतं पश्यति । अस्फुटं विपरीतं वा पश्यति । तस्मिंश्चक्षुषि विश्वा भुवनानि । चक्षुषा हि विश्वं पश्यति ॥ १४ ॥

**साकञ्जानांसप्तथमाहुरेकजंषळिद्यमाऽऋषयोदेवजाऽइति ।**
**तेषामिष्टानिविहितानिधामशस्स्थात्रेरेजन्तेविकृतानिरूपशः ॥**

**॥ १५ ॥**

२२-७-११



**साकम्+जानाम् । सप्तथम् । आहुः । एक+जम् । षट् । इत् । यमाः । ऋषयः । देव+जाः । इति ॥ तेषाम् । इष्टानि । वि+हितानि । धाम+शः । स्थात्रे । रेजन्ते । वि+कृतानि । रूप+शः ॥ १५ ॥ ३ ॥**

साकञ्जानामिति जगती । प्राणनारायणौ ।

सहजातानामृतूनां मध्ये सप्तममेकजमाहुः । एक एव जायते । नान्यैः सह । षडृतवः द्वाभ्यांद्वाभ्यां मासाभ्यां जायन्त इत यमाः । ऋषय इति ऋतवः । ऋष ज्ञाने । ऋ गतौ । सप्तमस्त्वेकस्मादधिकमासाज्जायते । अतस्ते मासाधिपदेवजाः । अयमेकदेवजः । सप्त च वासराः । आदित्यसोमौ, कुजबुधौ गुरुशुक्राविति षड् यमाः । शनिस्त्वेकः सूर्यजः ।

सर्वेषामिष्टानि पुष्पोद्गमपत्रशातनादीनि धामशः स्थानभेदेन विहितानि । अत एव रूपशः विविधतया कृतानि । स्थात्रे स्थिराय संवत्सराय रेजन्ते सभयं चलन्ति । 'भयादस्याग्निः–' इत्यादेः । अथ च सप्त सूर्याश्वाः, सप्त च्छन्दांसि । साकं रथे नियुक्तानामपि पुरोगमेकजमाहुः । तत्पृष्ठतः द्वौ, तत्पृष्ठतः द्वौद्वाविति षट् किल यमाः । नह्येकस्यां पङ्क्तौ सर्वेऽश्वा भवन्ति । ऋषय इति मन्त्राः । देवं जनयन्ति ज्ञापयन्तीति देवजाः । तेषामिष्टानि भगवद्रूपाणि धामशो विहितानि । अग्निगतं रूपं गायत्र्याः । सूर्यगतमुष्णिह इत्यादि । स्थापकाय भगवते तदाराधनार्थं रेजन्ते सभयं चलन्ति ।

अथाध्यात्मं सप्तेन्द्रियाणि । साक्षिषडिन्द्रियभेदेन । तत्र साक्षिणं सप्तममेकमेव पृथग्गतमाहुः । स्वरूपत्वात् । अन्ये षट् ऋषयो ज्ञानेन्द्रियाणि देवैस्तत्वमानिभिर्यम्यन्ते इति यमा उच्यन्ते । देवजा उच्यन्ते । अयमेकोऽसमानः अदेवजः । आख्यो देवः । अधिको देवश्च अदेवः । नारायणश्च जीवकलामानित्वाद् ब्रह्मवायू च । तेषामिन्द्रियाणामिष्टानि शब्दादीनि धामशः विहितानि । रूपशश्च विविधतया कृतानि । स्वेषां स्थात्रे स्थापकाय भगवते, तदभिमुखम्, तस्माद् भीताः रेजन्ते ॥ १५ ॥ ३ ॥

**॥ इति तृतीयो वर्गः ॥**

**स्त्रियस्सतीस्ताँउमेपुंसऽआहुःपश्यदक्षण्वान्नविचेतदन्धः ।**
**कविर्य्यःपुत्रस्सऽईमाचिकेतयस्ताविजानात्सपितुष्पितासत् ॥**
**॥ १६ ॥**

**स्त्रियः । सतीः । तान् । ऊँइति । मे । पुंसः । आहुः । पश्यत् । अक्षण्+वान् । न । वि । चेतत् । अन्धः ॥ कविः । यः । पुत्रः । सः । ईम् । आ । चिकेत । यः । ता । वि+जानात् । सः । पितुः । पिता । असत् ॥ १६ ॥**

छन्दस्त्रिष्टुप् । छन्दांसि चतुर्मुखः प्राणो नारायणश्च ।

छन्दोरूपेण स्त्रियः सतीः । स्वाहासञ्ज्ञारोहिणीतारारेवतीचर्षणीशचीनां छन्दोदेवतात्वात् तानेव मे पुंस आहुः सूर्याश्वरूपेण । अथच तासां पतीनां मानित्वविवक्षया छन्दोमानिनोऽपि पुंस आहुः । 'सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा' । 'अग्निः सविता सोमो बृहस्पतिर्मित्रावरणाविन्द्रो विश्वे देवा देवताः' इति यास्कः ।

तथाहि मन्त्रवर्णाः–

१. अग्नेर्गायत्र्यभवत् सयुग्वा ।

२. उष्णिहया सविता सम्बभूव ।

३. अनुष्टुभा सोम उक्थैर्महस्वान् ।

४. बृहस्पतेर्बृहती वाचमावत् ।

५. विराण्मित्रावरुणयोरभिश्रीः ।

६. इन्द्रस्य त्रिष्टुबिह भागो अह्नः ।

७. विश्वान् देवान् जगत्याविवेश ।

एते देवाः सूर्यनारायणरथं वहन्ति ।

२२-७-११



छन्दसामेव सूर्याश्वत्वं पश्यति यः सोऽक्षण्वान् । यो न विचेतति नैतज्जानाति स नूनमन्धः । इदं स एव जानाति । यः कविः पुत्रः । पुरुत्रं सन्तं पुत्रमाचक्षते । पुरुं परमात्मानं स्वहृदि त्रायत इति । यस्तान्येतानि प्रमेयजातानि विजानाति स पितुर्नारायणस्यापि पिता भवति । नामकृद्धि पिता भवति । भक्तो हि भगवतो नामकृत् ।

मन्त्रमिमं व्याचख्यौ तत्वप्रदीपाचार्यः–'स्त्रियः सतीः पुंस आहुर्वेदादिशब्दैः । अभिमान्यपेक्षया चायं व्यपदेश उपपद्यते । ज्ञानदृष्टिमानेव तान् पश्यति नाज्ञानी । कविः पुत्रो ब्रह्मा । 'यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः । 'तेने ब्रह्म हृदा य आदिकवये' इत्यादिस्मृतेश्च । स एव आ समन्ताद् वेद । यस्तानि च्छन्दांसि विशिष्टत्वेन जानाति साक्षाद् विष्णुवाचकत्वेन स पितुर्विष्णोः पिता भवति व्यञ्जकत्वात्' इति ।

स्त्रिय इत्यस्यान्योऽप्यर्थः प्रतिभाति–

भगवान् वोपास्यः भगवती वा? परं ब्रह्म स्त्रीरूपमुत पुरुषरूपमाहो अनुभयम्?

परदेवता स्त्र्येवेति शाक्ताः । पुरुष इति पौरुषेयाः । अनुभयं ब्रह्मेति मायावादिनः । पुंस्त्वादिकं शरीरधर्म इति ते मन्यन्ते ।

यदि पुंस्त्वादिकं न चेतनधर्मः कथमथ शरीरधर्मः? जडं हि शरीरम् । नहि पुंस्त्वं स्त्रीत्वं वा जडधर्म इत्यनुन्मत्तः कोऽपि वक्ति । चेतनधर्मः शरीरे व्यज्यत इति वक्तव्यम् । तेन जीवेषु केचन पुमांस एव, काश्चन स्त्रिय एवेति चाऽयातम् । नहि चेतनधर्मा व्यतियन्ति । एवं स्थिते चेतनत्वाद् परं ब्रह्म किंल्लिङ्गमिति जिज्ञास्यते ।

उभयरूपमित्युत्तरम् । उभयबिम्बत्वात् । अनन्तस्त्रीजीवेषु बिम्बतया स्त्रियः सतीः, अनन्तपुरुषजीवेषु च बिम्बतया तानेव मे पुंसोऽप्याहुः । य एवं स्त्रिय एव पुमांस इति पश्यति स किल चक्षुष्मान् । य एतद्रूह्यं न विचेतन्न बुध्यते

स नूनमन्धः। सत्यपि चक्षुष्यपश्यन्। अक्षण्वानिति सर्वेन्द्रियैः भगवदनुभूतिं चाऽह।

स्त्रीभ्यः पुमांसो वा स्त्रियो वा जायन्त इति प्राथम्यात् स्त्रियः सतीरिति प्रथम-माह। सर्वचेतनेभ्यः प्रथमं रमाया बहुरूपाया अयं बिम्बरूप इति च। स्वस्य बहुभावेऽपि प्रथमं रमायां प्रविश्य सृष्टिकरणाच्च प्रथमं स्त्रीरूपम्। भगवन्तमृते सर्वाधिका रमैवेति स्त्रिया एवाधिक्याच्च।

यः स्त्रीपुंसात्मकस्य लक्ष्मीनारायणस्य कविः पुत्रः, 'तेने ब्रह्म हृदा य आदिकवये' इत्युक्तः चतुर्मुखः वायुश्च, स एवैनं पितरं सम्यग् वेद। यस्तानि मातरपितरौ पुत्रश्चेति त्रीणि तत्वानि वेद, पुत्रस्य च वायोः तानि 'बळित्था–' इत्यादिश्रुतिप्रथितानि त्रीणि रूपाणि वेद स जनकस्यापि जनको भवति। अथच पितुः पिता पितामहो भवति। पौत्रं पश्यन् चिरं जीवतीत्यर्थः ॥ १६ ॥

**अ॒वःपरे॑णप॒रऽए॒नाव॑रेणप॒दाव॒त्सम्बिभ्र॑ती॒गौरुद॑स्थात्।**
**साक॒द्रीची॒कंस्वि॒दर्द्ध॒म्परा॑गा॒त्कं॑स्वित्सू॒ते॒नहि॒यू॒थेऽअ॒न्तः॥ १७ ॥**

**अ॒वः। परे॑ण। प॒रः। ए॒ना। अव॑रेण। प॒दा। व॒त्सम्। बिभ्र॑ती।**
**गौः। उत्। अ॒स्था॒त् ॥ सा। क॒द्रीची॑। कम्। स्वि॒त्। अर्द्ध॑म्।**
**परा॑। अ॒गा॒त्। क्व॑। स्वि॒त्। सू॒ते। न॒हि। यू॒थे। अ॒न्तरिति॑ ॥**
**॥ १७ ॥**

अत्र प्रथमपादे एकमक्षरमधिकम्। तुरीये न्यूनम्। संहत्य चतुश्चत्वारिंशदक्षरेति केवला त्रिष्टुप्। सूर्यः, वेदवाक्, नारायणश्च।

गौर्वेदवागुच्यते। या पूर्वमश्वरूपोक्ता सेयमिह गौर्बभूव। स्वपदैर्वत्सं नारायणाख्यं बिभ्रती आविरभवत्। कुत्र ऋषीणां हृदयाकाशे। परेण शिरसा अवस्तात्। एना अवरेण पादेन परस्तात्। भूस्थानीयात् पादादुपरि

२२-७-११



स्वःस्थानीयाच्छिरसोऽधस्तात्। हृदयाकाश इत्येतत्। अपि च स्वरवस्तात्, भुव उपरि अन्तरिक्षे स्थिता गौः। अपौरुषेयत्वात् सदा गगनगेत्यर्थः। अत एव कद्रीची कुत्सितं दोषं निस्सारयन्ती। क्व गच्छतीत्यनिश्चेयरूपा इत्येके। किं प्रतिपादयतीति स्फुटमज्ञेयरूपा कं स्विदा ऋद्धं प्रति परा-गतैव भगवन्तम्। क्वचिद् वत्सं सूते। नहीतरगोवद् यूथे, नहि वेदवाद-रतानां यूथे। किन्तु ज्ञानिनामन्तर्हृदये अन्तः। अथ गौरिति सूर्यप्रभा। पदा किरणजालेन अहराख्यं वत्समुदस्थात्। भूमेः कंस्विदर्धं परागत्यापरमर्धं प्रकाशयामास। कद्रीची अदृश्यगमना।

वत्सं भगवज्ज्ञानेनान्तःप्रकाशाख्यं सूते। आदित्याख्यं वा। क्व स्विद् वत्सं सूते? नहि बाह्ये ग्रन्थयूथे। किन्तु अन्तः हृदये। सूर्यं वत्सं क्वस्वित्? नहि गोयूथमध्ये। तर्हि क्वेति विस्मयते। कुत आगतमिदं अहर्वा अयमादित्यो वा अकस्मात् तमो विभिद्येति विस्मयते ॥ १७ ॥

**अ॒वःपरे॑णपि॒तरं॑योऽअ॑स्यानु॒वेद॑प॒रऽए॒नाव॑रेण।**
**क॒वी॒यमा॑न॒ःकऽइ॒हप्रवो॑च॒द्दे॒वम्मन॒ःकुतो॒ऽअधि॒प्रजा॑तम् ॥ १८ ॥**

**अ॒वः। परे॑ण। पि॒तर॑म्। यः। अ॒स्य। अ॒नु॒+वेद॑। प॒रः। ए॒ना।**
**अव॑रेण ॥ क॒वि॒+यमा॑नः। कः। इ॒ह। प्र। वो॒च॒त्। दे॒वम्।**
**मन॑ः। कुत॑ः। अधि॑। प्र+जा॑तम् ॥ १८ ॥**

प्रथमद्वितीयचरणयोर्व्यूहेन छन्दःपूर्तिः। अग्निः, सूर्यः, प्राणो, नारायणः।

अवस्तात् भूमौ स्थितमग्निं परेण आदित्येन सह यो भगवदधिष्ठानं वेद। एनेनावरेण सह तमादित्यं च योऽनुवेद। पातृत्वात् पितरम्। तापकत्वा-द्वा। अवः प्राणमेना परेण नारायणेन सह वा। अवः अवरं पाश्चात्यमवतारजातं परेण पूर्वतनेनावताररूपेण वा यो वेद। स कवीयमानः। स कविर्भवति यो वागर्थप्रतिपत्तिमान् भवति। सर्वज्ञ इत्येत्। नहि सार्वज्ञ्यमन्तरा सर्वासां वाचां सर्वेषामर्थानां प्रतिपत्तिर्भवति। क इह पितरं वक्ति। को ब्रह्मा

वायुर्वा प्रोच्यात् । मनः देवम्, दिवु द्युतौ, सत्यं द्योतयत् सत् अधिकं कुतः प्रजातम् । तस्मादेव पितुः । अन्यथा नेदं सम्भवतीति । अग्निर्वै देवानामवमः, विष्णुः परमः । तेन परेण सह अवस्तादग्निमिति वा । तारतम्यान्तगत्वेन नारायणपरिज्ञानमिह विवक्षितम् ॥ १८ ॥

**येऽअर्वाश्चस्ताँउपराचऽआहुर्य्येपरांश्चस्ताँउऽअर्वाचऽआहुः ।**
**इन्द्रश्चयाचक्रथुस्सोमतानिधुरानयुक्तारजसोवहन्ति ॥ १९ ॥**

**ये । अर्वाञ्चः । तान् । ऊँइति । परांचः । आहुः । ये । परांञ्चः । तान् । ऊँइति । अर्वाचः । आहुः ॥ इन्द्रः । च । या । चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः । वहन्ति ॥ १९ ॥**

स्फुटं त्रिष्टुप् । प्राणनारायणौ पुनःपुनः स्तूयेते ।

ये अपरावतारास्त एव परावतारा इत्याहुः । तथाहि श्रूयते–‘प्रणवो ह्यपरं ब्रह्म प्राणवश्च परं स्मृतः । अपूर्वोऽनन्तरोऽबाह्यो न परः प्रणवोऽव्ययः’ इति । ‘परत्वमपरत्वं च विष्णोरेकस्य वै यदा । श्रूयते न तु सामर्थ्यभेदस्तत्र कथञ्चन । अवतारस्य पूर्वत्वात् पौर्वापर्यमुदाहृतम्’ इति च भाष्ये ब्रह्मतर्कवचनम् । ‘एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः’ इति च षट्प्रश्नोपनिषत् । अर्वाञ्चः पिण्डाण्डनियामकाः । पराञ्चः ब्रह्माण्डनियामका इति च ।

हे सोम पवमान, त्वं च इन्द्रश्च नारायणश्च यानि चक्रथुः कृतवन्तौ । सोम नारायण, इन्द्रो वायुश्च वा । उत्कृष्टा मा उमा तेन सहितः सोमः । सौम्य-गुणत्वाच्च । ‘सोमः पवमानः’ इति च । तानि युवयोः कर्माणि रजसो लोकस्य, लोकं वहन्ति निर्वहन्ति । धुरा कर्तव्ये बद्धतया युक्ताः पुरुषा इव ।

इन्द्रश्च सोमश्च यानि दैवतानि तत्वानि वा चक्रथुः । तानि च लोकान् वहन्ति । एवं पूर्वार्धे वायुरपि किञ्चिदिवोच्यते । ये वायोरवतारा अर्वाञ्चो भवन्ति तेऽपि पराच इव समानसामर्थ्यानाहुः । पराञ्चश्चर्वाच इवेति ॥१९॥

२२-७-११



**द्वासुपर्ण्णासयुजासखायासमानंवृक्षम्परिषस्वजाते ।**
**तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योऽअभिचाकशीति ॥ २० ॥**

**द्वा । सु+पर्ण्णा । स+युजा । सखाया । समानम् । वृक्षम् । परि । सस्वजातेइति ॥ तयोः । अन्यः । पिप्पलम् । स्वादु । अत्ति । अनश्नन् । अन्यः । अभि । चाकशीति ॥ २० ॥ ४ ॥**

अत्र प्रथमचरणे ‘दुवा’ इति विश्लेषेणाक्षरपूर्तिः । स्वादु+अत्ति+अनश्नन्’ इति विश्लेषेण तृतीयचरणे । तेन केवला त्रिष्टुप् । अन्यथा चेदियं भुरिक् पङ्क्तिः स्यात् । अत्रापि पूर्ववत् प्राणनारायणौ स्तूयेते ।

सुपरानन्दः सुपर्णो भगवान् । सुपरमणतीति, सुपरेण णो यस्येति वा सुपर्णो जीवः । ताविमौ द्वौ सुपर्णौ ईशजीवौ । ’सुपां सु-सुक्-पूर्वसवर्ण-आच्छे-या-डाड्याजालः’ इत्यौकारस्य आकारः । सुपर्णौ सुपक्षौ पतगाविवेति रूपकम् । द्वाविति भेदवचनम् । द्वित्वस्य सुपर्णाविति द्विवचनेनैव लाभाद् द्वाविति न वक्तव्यम् । नहि ‘रामकृष्णौ द्वावागच्छतः’ इति क्वाप्युच्यते । भेदो वा भेदकार्यकारित्वं वा द्वित्वमुच्यते सर्वत्र । ‘द्विशब्दो द्वित्वसङ्ख्यायां भेदे चापि प्रयुज्यते’ इति चाभिधानम् । यत्र द्वौ बालावागच्छत इत्यादिष्वपि भिन्नस्वभावविशिष्टत्वमेव द्विशब्दार्थः । तथाऽपि सहाऽगच्छत इत्यर्थः । अन्यथा द्विवचनमवर्जनीयसन्निधिः । सह युङ्क्त इति सयुजौ । एकदेश-स्थितौ । योगः सम्बन्धः । सच तादात्म्यलक्षण इति स्वव्याहतं वदन् सायणोऽनुकम्पनीयः । योगो हि द्वित्वमपेक्षते । द्वित्वं च भेदम् । ननु युयुत्सयाऽपि समवायेताम् । नेत्याह– सखायौ । सुहृदौ । ‘अग्निमीळे पुरोहितम्’ इति श्रुतिः । ‘तस्याविज्ञातनामाऽऽसीत् सखा ह्यज्ञातचेष्टितः’ इति च भागवते । अनादिसखः सः । वृश्च्यमानत्वेन साधर्म्येण अश्वत्थवृक्षसदृक्षो देहो वृक्षशब्देनोच्यते । तत्र हृदयनीडं परिषस्वजाते । परिष्वजेते । परिष्वज्य तिष्ठतः । आश्रित्य वसत इत्येतत् । तयोरन्यः जीवः पारतन्त्र्यात्

पिप्पलमश्वत्थफलमिव कर्मफलं स्वादंस्वादं स्वादुत्वभ्रमेण अत्ति । अन्योऽनश्नन् परमात्मा न्यायाधीश इव जीवमभिपश्यति । साक्षीभूयेक्षते ॥

अथच पूर्वमन्त्रानुगुणतयाऽर्थान्तरं चावगम्यते । द्वौ सुपर्णौ प्राणनारायणौ । शतानन्दत्वात्, जीवेषु परानन्दत्वात् प्राणोऽपि सुपर्णः । अन्यत् समानम् । प्राणस्तु प्रायः पुण्यकर्मफलं स्वाद्वत्ति । इति सर्वं रमणीयम् ॥

अपि च द्वौ जीवस्तन्मानी मुख्यप्राणश्च । वृक्षं देहं नारायणं वा । व्रश्चतीति वृक्षो नारायणः, पक्ष्याधारत्वाच्च । संसारहेतुत्वात् जन्ममृतिभ्यां संसारे व्रश्चतीति । वृतौ क्षौ सुखचेष्टौ येनेति वा वृक्षो भगवान् । जीवः कर्मफलमत्ति । प्राणः पश्यन्नादयति ॥ २० ॥ ४ ॥

**॥ इति चतुर्थो वर्ग्गः ॥**

**यत्रासुपर्ण्णाऽअमृतस्यभागमनिमेषंविदथाभिस्वरन्ति ।**
**इनोविश्वस्यभुवनस्यगोपास्समाधीरःपाकमत्राविवेश ॥ २१ ॥**

**यत्र । सु+पर्ण्णाः । अमृतस्य । भागम् । अनि+मेषम् । विदथा । अभि+स्वरन्ति ॥ इनः । विश्वस्य । भुवनस्य । गोपाः । सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ॥ २१ ॥**

केवला त्रिष्टुप् । नारायणः स्तूयते ।

यत्र वृक्षाख्यशरीरे स्थिताः, यत्र वृक्षवदाश्रये भगवति स्थिताः, सुपर्णाः सात्विकजीवाः । अमृतस्य भागम् । द्वौ भागावमृतत्वस्य । दुःखनिवृत्तिरानन्दावाप्तिश्च । तत्रैकं भागं विदथा भगवदितरस्यासारताज्ञानेन अभिस्वरन्ति प्राप्नुवन्ति । अभिस्वरन्ति चिन्तयन्ति वा । तथा अमृतस्य अपरं भागं अनिमेषं प्रतिक्षणं विदथा भगवदनुसन्धानेन अभिस्वरन्ति । चिन्तनप्रकारमेवाऽह– धिया रमत इति धीरो ज्ञानानन्दमयः । विश्वस्य भुवनस्य

२२-७-११



इनः स्वामी । गोपायिता च स मा अत्र देहे पाकं प्रत्याविवेश । स एवान्तः प्रविश्य मां पक्वं करोतु । 'न ऋते त्वत् क्रियते किञ्चनारे–' इत्यादेः । यत्रा इति क्षैप्रे दीर्घलोपः प्रतृण्णे ॥ २१ ॥

**यस्मिन्वृक्षेमध्वदस्सुपर्ण्णानिविशन्तेसुवतेचाधिविश्वे ।**
**तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यःपितरन्नवेद ॥ २२ ॥**

**यस्मिन् । वृक्षे । मधु+अदः । सु+पर्ण्णाः । निऽविशन्ते । सुवते । च । अधि । विश्वे ॥ तस्य । इत् । आहुः । पिप्पलम् । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥२२॥**

'मधु+अदः', 'स्वादु+अग्रे' इति क्षैप्रविश्लेषेण छन्दःपूर्तिः । पुनर्नारायणस्तवः प्रस्तूयते ।

यस्मिन् सुकृतनिर्मिते देहे मध्वदः सुकृतफलभुजः भगवद्गुणामृतरसास्वादिनः सन्तः सुपर्णा निविशन्ते निवसन्ति विश्वेऽपि । पुनरधिकं च शुभाख्यमपत्यं सुवते । तस्य तादृशस्य सुकृतमयशरीराख्यस्य वृक्षस्य अग्रे हस्ताख्यशाखाग्रे सञ्जातं पिप्पलमेव स्वाद्वाहुः । यः पितरं पञ्चपादं न वेद स तत् स्वादु फलं न उन्नशत् नाश्नाति न प्राप्नोतीत्यर्थः । वेदे नशतिः प्राप्त्यर्थः पठ्यते ।

अथच– वृक्षे वृतसुखप्राणे संसारच्छेदके नारायणे मध्वदः मोक्षसुखमदन्तः, सम्यक् परमणन्तीति मुक्ताः मुख्यतः सुपर्णा उच्यन्ते, नित्यं वसन्ति । मानसयज्ञे पुनरधिकं भक्तिसोमं सुवते । तस्यैव अग्रे पिप्पलं स्वादु । तद्दत्ततयाऽन्येषामपि स्वादु भवति । 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' । 'ऋतं पिबन्तौ सुकृतस्य लोके' इति च । तन्नाश्नाति स यः पितरं नारायणं न वेद ।

अथच मध्वदः इति ङेः सुः । 'सुपां सु–' (अ.सू.७.१.३९) इति स्मरणात् । तथाच मध्वदः मध्वदे साधकजीवस्य गुरुत्वेन मध्वं ददातीति तादृशवृक्षे नारायणे । अन्यत् समानम् ॥ २२ ॥

**यद्गायत्रेऽअधिगायत्रमाहितन्त्रैष्टुभाद्वात्रैष्टुभन्निरतक्षत ।**
**यद्वाजगज्जगत्याहितम्पदंयऽइत्तद्विदुस्तेऽअमृतत्वमानशुः ॥२३॥**

**यत् । गायत्रे । अधि । गायत्रम् । आ+हितम् । त्रैस्तुभात् । वा ।**
**त्रैस्तुभम् । निः+अतक्षत ॥ यत् । वा । जगत् । जगति ।**
**आ+हितम् । पदम् । ये । इत् । तत् । विदुः । ते । अमृत+त्वम् ।**
**आनशुः ॥ २३ ॥**

जगती च्छन्दः । तृतीयपादस्यैकादशाक्षरत्वेऽपि तुरीयस्त्रयोदशाक्षर इति छन्दःपूर्तिः । सवनत्रयदेवता ब्रह्मवायू नारायणश्च देवताः ।

गायत्रमिति गायत्रीमानिन्या इदं दैवतमिति स्वाहापतिरग्निरुच्यते । गायत्रीच्छन्दोबद्धश्च मन्त्रो गायत्रः । मन्ता च विप्रः । यो गायत्र्या सूर्यनारायणमारिराधयिषति । अग्नेरधिष्ठानमिति भूश्च गायत्रमुच्यते । अष्टौ वसवः प्रातःसवनदेवताः । तेनाष्टाक्षरा गायत्री प्रातःसवनसम्बन्धिनीति गायत्रमिति प्रातःसवनमुच्यते । गायत्रमिति गायत्रीमुख्यमानिनौ ब्रह्मवायू उच्येते । तदिदं गायत्रजातम् । अस्मिन् गायत्रे गायत्रं गायन्तं त्रायमाणं नारायणाख्यं ब्रह्म अधिकत्वेन आहितं निहितम् । तच्च पदं सर्वेषां पदनीयं मुक्तिगम्यमित्येतत् । 'गायत्रं प्रातःसवनम्, त्रैष्टुभं माध्यन्दिनं सवनम्, जागतं तृतीयसवनम्' इति तैत्तिरीयसंहितायम् (२.२.९.५–६) । प्रातःसवने वस्वन्तर्गतस्याष्टरूपस्य भगवत उपास्यत्वात् अष्टाक्षरमेव प्रतिगरमन्त्रपदं गायत्रे भवति । तद् यथा– 'शोंसावोम्' इति त्र्यक्षरेण होता, 'शंसामोदैवोम्' इति च पञ्चाक्षरेणाध्वर्युः । एवं गायत्रे प्रातःसवने गायत्रमष्टाक्षरं प्रतिगरमन्त्रपदमाहितम् ॥

त्रिष्टुम्मानिन्याः शच्या इदं दैवतमिति त्रैष्टुभमिति शचीपतिरिन्द्र उच्यते । त्रिष्टुप्छन्दोबद्धश्च मन्त्रः । त्रीन् क्षत्रादीन् स्तोभत इति त्रैष्टुभं क्षत्रम् । अन्तरिक्षमपि त्रैष्टुभम् । त्रयाणामपि लोकानां संयोजनेन धारणया स्तम्भनात् ।



एकादश रुद्रा माध्यन्दिनसवनदेवताः । तेनैकादशाक्षरा त्रिष्टुप् माध्यन्दिनसवनसम्बन्धिनीति माध्यन्दिनं सवनं त्रैष्टुभमुच्यते । मुख्यतस्त्रिष्टुब्देवता रुद्रश्च । तद्गतौ ब्रह्मवायू च । तदिदं त्रैष्टुभजातम् । त्रयाणां लोकानां धारणात्, प्रवृत्तिपुरुषकालानां वा, ओङ्कारव्याहृतिवाच्यत्वाद् वा त्रैष्टुभं ब्रह्म एतस्मात् त्रैष्टुभात् निरतक्षत निर्धारितवन्तः । अथच माध्यन्दिन एकादशाक्षरस्त्रैष्टुभः प्रतिगरमन्त्रः । 'अध्वर्यो शोंसावोम्' इति, 'शंसामोदैवोम्' इति च । एवमेकादशरुद्रान्तर्गत एकादशात्मा नारायण एकादशाक्षरपदकेन प्रतिगरमन्त्रेण मध्यन्दिने स्तूयत इत्यतिसुन्दरम् ॥

एवं प्रातःसवनान्तेऽपि प्रतिगरेऽष्टाक्षराणि भवन्ति । 'उक्थं वाचि' इति, 'ओमुक्थशाः' इति । एवं माध्यन्दिनसवनान्तेऽपि प्रतिगर एकादशाक्षराणि भवन्ति । 'उक्थं वाचि इन्द्राय' इति, 'ओमुक्थशाः' इति च ॥

एवं जगतीमानिनीनां स्वाहासञ्ज्ञारोहिणीताराणां मित्रावरुणयोर्भार्ययोः शच्याश्चेति सप्तदेवीनां पतयो जगत्पदेनोच्यन्ते । जगति ततो वैश्यवर्णश्च । देवानामधिष्ठानं स्वश्च । जगतीच्छन्दोबद्धो मन्त्रश्च । द्वादशादित्याः तृतीयसवनदेवताः । तेन द्वादशाक्षरा जगती सायंसवनसम्बन्धिनीति सायंसवनमपि जगदित्युच्यते । जगतीच्छन्दसो मुख्यमानी आदित्यश्च । आदित्यान्तर्गतौ ब्रह्मवायू च । एवमेतावति जगति यद्वा यच्च जगत्पदमाहितम् । पदनीयं सर्वत्र गच्छतीति जगच्च नारायणाख्यमाहितम् ।

अथच सायंसवने द्वादशाक्षरः प्रतिगरन्त्रः – 'अध्वर्यो शोंशोंसावोम्' इति, 'शंसामोदैवोम्' इति च । सवनान्ते च– उक्थं वाचि इन्द्राय देवेभ्यः' इति, क्षैप्रव्यूहेनैकादशाक्षरेण, 'ओम्' इत्येकाक्षरेण च जगती च्छन्दः । ये तद् विदुः त इत् त एव अमृतत्वमश्नन्ति प्राप्नुवन्तीति ॥ २३ ॥

**गायत्रेणप्रतिमिमीतेऽअर्कमर्केणसामत्रैष्टुभेनवाकम् ।**
**वाकेनवाकन्द्विपदाचतुष्पदाक्षरेणमिमतेसप्तवाणीः ॥ २४ ॥**

**गा॒य॒त्रेण॑ । प्रति॑ । मि॒मी॒ते॒ । अ॒र्कम् । अ॒र्केण॑ । साम॑ । त्रैस्तु॑भेन । वा॒कम् ॥ वा॒केन॑ । वा॒कम् । द्वि॒+पदा॑ । चतु॑ः+प॒दा । अ॒क्षरे॑ण । मि॒म॒ते॒ । स॒प्त । वाणी॑ः ॥ २४ ॥**

त्रिष्टुप् छन्दः । तृतीयपादे द्वादशाक्षरा । तुरीये दशाक्षरा । संहत्य छन्दः-पूर्तिः । जगतीगर्भा वा त्रिष्टुप् । अक्षरेण इति विश्लेषेण तुरीयेऽपि त्रिष्टुप्त्वम् । तेन भुरिक् त्रिष्टुब् वा । छन्दोमयो नारायणः स्तूयते ।

गायत्रेण च्छन्दसा अर्च्यतेऽनेनेति अर्कमर्चनसाधनं सर्वमपि मन्त्रजातं प्रति मिमीते निश्चिनोति । गायत्रीमूलत्वाच्छन्दसाम् । इयं चतुर्विंशत्यक्षरा तत इयं गायत्री, इयं ततश्चतुराधिका, तत इयमुष्णिगित्यादि परिच्छिनत्तीति प्रातीतिकोऽर्थः । गायत्रेण गायत्रीप्रतिपाद्येन स्वाहाया अग्नेश्चान्तर्यामिणा भगवता अर्कमर्चनीयमादित्यान्तर्गतं च रूपविशेषं प्रतिमिमीते । चतुर्विंशत्य-क्षरेयमतश्चतुर्विंशत्यात्माऽनेन मन्त्रेणार्चनीय इति । दशपदेयमतो दशात्मा भगवानर्चनीयः । त्रिपादियम्, तेन त्रिपान्नारायणः त्र्यवस्थाप्रेरकश्चोपासनीय इत्यादि निर्धारयति । एवं सूर्यान्तर्गतश्च पक्षनियामकतया चतुर्विंशतिरूपः, मासनियामकतया द्वादशरूपः, ऋतुनियामकतया षट्पञ्चरूप इत्यादि प्रतिरूप-मनुसन्धत्त इत्यर्थः । 'पञ्चपादं पितरं द्वादशाकृतिम्' इत्यादि चोक्तम् । एवं सप्त गायत्र्यः षडुष्णिहः सम्पादयन्ति । चतस्रो गायत्र्यस्तिस्रोऽनुष्टुभो भवन्ति । तिस्रो गायत्र्यो द्वे बृहत्यौ भवतः । पञ्च गायत्र्यस्तिस्रः पङ्क्त्यो भवन्ति । एकादश गायत्र्यः षट् त्रिष्टुभो भवन्ति । द्वे गायत्र्यावेका जगती भवति । एवं गायत्रेण च्छन्दसा सर्वाण्यक्षरच्छन्दांसि प्रति मिमीते लोकः ॥

एवमर्केण ऋङ्मन्त्रेण साम प्रतिमिमीते । ऋच्यध्यूढं हि साम । इयं गायत्री तेनात्र च रथन्तरं साम गातव्यमित्यादि परिच्छिनत्ति । इयं गायत्री अतः षड्जश्रुत्या गातव्यमित्यादि च । एवमर्कगतेन सामगतं भगवन्तं प्रति-

२२-७-११



मिमीते । य एव मन्त्रमेयः, स एव गानगेयश्चेति । य एवार्च्यत्वादर्कः, स एव सर्वरूपेषु समत्वात् सामेति ॥

एवं त्रैष्टुभेन त्रिष्टुप्प्रचुरेण ऋग्वेदेन वाकं वाक्यरूपं यजुर्वेदं प्रति मिमीते, यथा श्लोकास्तथा वाका अपि भगवत्परा इति । यथा पद्यानि तथा गद्यान्यपि इति । एवं त्रयाणामपि वेदानां भगवत्परत्वमनुसंहितं भवति । एवं द्विपदा चतुष्पदा ऋङ्मयेन वाकेन, अपदा यजुर्मयेन वा वाकेन सर्वं वाक्यजातं भगवत्परमिति निश्चिनोति । एवं त्रैष्टुभेन ऋग्वेदवाच्येन भगवता यजुर्वाच्यत्वेन वाकनामकं भगवन्तमभेदेनानुसन्धत्ते । त्रीन् लोकान् स्तोभत इति च त्रैष्टुभो भगवान् । वाति सर्वत्र करोति सर्वमिति वाकः । ज्ञानरूपत्वाद् वः । पूर्णानन्दत्वादाकश्चेति वा । एवं आत्मान्तरात्मेति द्विपात् । वासुदेवाद्यात्मना चतुष्पात् । एवमेकैकेनाक्षरेण ओङ्कारेण भगवत्परतयाऽनुसंहितेन सप्तच्छन्दोमयाः वाणीरपि भगवत्परतयाऽनुमिमते । सप्तश्रुतिबद्धाः सर्वाश्च वाणीः । अथ चाक्षरगतेनाक्षरनाम्ना सर्वपदवाच्यानि भगवद्रूपाणि प्रतिमिमते । सर्वपदानामेकपञ्चाशदक्षरात्मकत्वादिति ॥ २४ ॥

## जग॑ता॒सिन्धुं॑न्दि॒व्य॑स्तभायद्रथन्त॒रेसूर्य्य॒म्पर्य्य॑पश्यत् । गा॒य॒त्रस्य॑स॒मिध॑स्ति॒स्रऽआ॑हु॒स्ततो॑म॒ह्नाप्रिरि॑रिचेमहि॒त्वा॥ २५ ॥

**जग॑ता । सिन्धु॑म् । दि॒वि । अ॒स्त॒भा॒य॒त् । र॒थ॒म्ऽत॒रे । सूर्य॑म् । परि॑ । अ॒प॒श्य॒त् ॥ गा॒य॒त्रस्य॑ । स॒मिध॑ः । ति॒स्रः । आ॒हुः॒ । तत॑ः । म॒ह्ना । प्र । रि॒रि॒चे॒ । म॒हि॒+त्वा ॥ २५ ॥ ५ ॥**

सामप्रियो नारायणः स्तूयते । 'दिवि+अस्तभायत्' इति, 'सूरियं पर्यपश्यत्' इति च विश्लेषेण छन्दःपूर्तिः ।

जगत्यामुत्पन्नं साम जगत् । जगता गायन् ब्रह्मा स्यन्दते वृष्टिरनेनेति वर्षणहेतुं सूर्यमस्तभायद् दिवि स्थापयामास । जगत्या आदित्यदैवतत्वात् जगत्साम्ना

आदित्यान्तर्गतं नारायणं गायन्नेवानायासेनाऽदित्यं ससर्जेत्यर्थः । ततः परं रथन्तरे साम्नि गीयमाने सुस्थितं सूर्यमपश्यत् । स्वसृष्टिदार्ढ्यं स्वयमेव गायन्नास्वदते । गायत्रस्य साम्नः समिन्धानाः प्रकाशिकाः तिस्र ऋच आहुः । गायत्र्येव द्वाभ्यामक्षराभ्यां समेधिताऽनुष्टुब् भवति । ततस्त्रिभिरक्षरैः त्रिष्टुप् । तत एकेनाक्षरेण जगतीति । ततः मह्ना बलेन पूज्यत्वेन, महित्वना महत्वेन च गायत्री प्ररिरिचे अत्यरिच्यत ॥

जगता जगत्सामवाच्येन सर्वगतेन भगवता तदनुग्रहेण सिन्धुमादित्यं वियद्गङ्गां वा दिव्यस्थापयत् । रथन्तरे रथन्तरसामप्रतिपाद्ययो रततरयो-र्लक्ष्मीनारायणयोराश्रित्य स्थितं सूर्यमपश्यत् । गायत्रीप्रतिपाद्यस्य भगवतः तिस्रः समिधः । जाग्रत्स्वप्नसुप्तिप्रकाशकानि त्रीणि रूपाणि । तस्माद् गायत्री प्र भगवद्वाचकत्वेन प्रकटं रिरिचे ॥ २५ ॥ ५ ॥

**॥ इति पञ्चमो वर्ग्गः ॥**

**उपह्वयेसुदुघान्धेनुमेतांसुहस्तोगोधुगुतदोहदेनाम् ।**
**श्रेष्ठंसवंसवितासाविषन्नोभीद्धोघर्म्मस्तदुषुप्रवोचम् ॥ २६ ॥**

**उप । ह्वये । सु+दुघाम् । धेनुम् । एताम् । सुह+स्तः । गो+धुक् ।**
**उत । दोहत् । एनाम् ॥ श्रेष्ठम् । सवम् । सविता । साविषत् । नः ।**
**अभिऽइद्धः । घर्म्मः । तत् । ऊँइति । सु । प्र । वोचम् ॥ २६ ॥**

‘अभीद्धः’ इति विश्लेषेण केवला त्रिष्टुप् । वाग्देवता वाक्पतिर्वायुर्नारायाणश्च देवताः । क्वचिदादित्यश्च ।

यज्ञधेनुमुपह्वय इत्याह होता । एतां पुरत आगच्छन्तीम् । सुष्ठु क्षीर-दोग्ध्रीम् । उत अथ दोहनकुशलहस्तः गोदोग्धा अध्वर्युः एनां दोहत् दोग्धु । सविता भगवानिमं श्रेष्ठं नः सवं यज्ञं सावषत् प्रेरयतु । षू प्रेरणे । अनुजानातु वा । घर्मः, क्षीरं यत्र श्रायति शृतं भवति, सा चुल्ली

२२-७-११



घर्म इत्युच्यते । स घर्मः पचनार्थमभीद्धो वर्तते । तदु तस्मादेव एवं सु प्रावोचम् ।

एतां धेनुं सुवृष्टिदुघां देवतामुपह्वये । शोभनकिरणः जलदोग्धा आदित्य एनां दोग्धु । सवं जलवर्षणं परमेश्वरो नोऽनुजानातु । घर्मोऽयं ग्रीष्मर्तुर-भीद्धः । तस्मादेवं ब्रवीमि ।

धिनोति प्रीणयतीति धेनुर्वाक् । धिवि प्रीणने । भगवन्तं च प्रीणयति । नश्च प्रीणयति । एतां वेदवाचम् । सुतरां सुखदानर्थान् दोग्धि च । अस्मानुपश्रयेति आह्वयामि । सुहस्तः शब्दैरेव चारु प्रतिमानिर्माणकुशलः शब्दशिल्पी वाचां दोग्धा विश्वगुरुर्वायुरेनां दोग्धु । अपूर्वानर्थानस्मासु स्फोरयतु । गोपालनन्दनो वा गोधुक् । एनं श्रेष्ठं ज्ञानयज्ञं भगवाननुजा-नातु । ज्ञानदाहोऽन्तरभीद्धः । तत एवं ब्रवीमीति ॥ २६ ॥

**हिङ्कृण्वतीवसुपत्नीवसूनांवत्समिच्छन्तीमनसाभ्यागात् ।**
**दुहामश्विभ्याम्पयोऽअघ्न्येयंसावर्द्धताम्महतेसौभगाय ॥ २७ ॥**

**हिङ्+कृण्वती । वसु+पत्नी । वसूनाम् । वत्सम् । इच्छन्ती । मनसा ।**
**अभि । आ । अगात् ॥ दुहाम् । अश्वि+भ्याम् । पयः । अघ्न्या ।**
**इयम् । सा । वर्द्धताम् । महते । सौभगाय ॥ २७ ॥**

वाक् स्तूयते । गोस्तव इति यावत् । ‘मनसा+अभ्यागात्’ इति, ‘मनसाऽभि+आगात्’ इति वा विश्लेषेण द्वितीयचरणे छन्दःपूर्तिः । ‘अघ्नियेयम्’ इति तृतीयचरणे ।

वसूनां देवानां यद्वसु पयआख्यं तत् पातयति स्रावयतीति वसुपत्नी । वत्समिच्छन्ती, अत एव वत्साह्वानाय हिङ्कुर्वती । मनसा इच्छन्तीति व्याख्यानं न स्वरसम् । मनसैव हि सर्वोऽपीच्छति । नामनसा । मनसा प्रीत्या वत्समभि आगात् । न बलात्कारेण, रज्जुकर्षणादिना । सेयं प्रीत्याऽऽगता अघ्न्या

अहन्तव्या गौः पयो दुहां दुग्धाम् । अश्विभ्यां रामकृष्णाभ्याम् । 'रामकृष्णौ तथाऽश्विनौ' इति हि स्मरन्ति । एवमश्विभ्यां स्ववैद्याभ्यां पयसः दिव्यौषधत्वसम्पादनार्थम् । एवमश्विभ्यां प्राणनारायणाभ्याम् । भगवत एव वा स्त्रीपुरुषरूपाभ्याम् । 'स्त्रीरूपो हयशीर्षवान्' इति हि स्मरन्ति । महते भाग्याय नः सा वर्धताम्, वर्धयतां वसुजातम् ।

वसूनां वसु हविरादिकं पालयन्ती पत्नी भवति । स्तननेन हिङ्कृण्वती गुडुगुडायमाना वत्सं प्रजामिच्छन्ती प्रीत्या भुवि वृष्टिं ववर्ष । इयमघ्न्या मेघमाला अश्विभ्यां सूर्यवायुभ्यां पयो दुग्धाम् । वर्धतां नः सौभगाय ।

वसूनां वसुर्वायुः । तत्पत्नी । हिङ्कारेण साम्नोपष्टम्भिता । वत्सं नारायणं गातुमिच्छन्ती । मनःपूर्वकं नः अभ्यागात् । अपौरुषेयत्वादघ्न्येयं प्राणनारायणाभ्यां तदनुग्रहेण तद्गुणाख्यं पयो दुग्धां महते सौभगायेति ॥ २७ ॥

**गौर॑मीमे॒दनु॑व॒त्सम्मि॒षन्त॑म्मू॒र्द्धानं॑हि॒ङ्ङ॑कृणो॒न्मात॒वाऽउ॑ ।**
**सृक्वा॑णङ्घ॒र्म्मम॒भिवा॑वशा॒नामिमा॑तिमा॒युम्पय॑ते॒पयो॑भिः ॥ २८ ॥**

**गौः । अ॒मी॒मे॒त् । अनु॑ । व॒त्सम् । मि॒षन्त॑म् । मू॒र्द्धान॑म् । हिङ् ।**
**अ॒कृ॒णो॒त् । मात॒वै । ऊँ॒इति॑ ॥ सृक्वा॑णम् । घ॒र्म्मम् । अ॒भि । वा॒व॒शा॒ना ।**
**मिमा॑ति । मा॒युम् । पय॑ते । पय॑ः+भिः ॥ २८ ॥**

स्फुटं त्रिष्टुप् । मन्त्रोऽयं गोस्तवः । गौरिति यज्ञधेनुः, मेघजलम्, वाग्देवी च ।

गौरमीमेत् । मीमृ शब्दे । शब्दापयति । मिषन्तं चक्षुर्विक्षिपन्तं वत्समनुगता । मातवै उ वत्सविषये प्रीत्यतिशयं निर्मातुम् । व्यञ्जयितुमित्येतत् । मूर्धानं हिङ्कृत्य लेढि । घर्मं पयःस्पर्शेन कोष्णं वत्सस्य सृक्वाणं पयः स्रवन्तं सफेनं वदनप्रान्तं अभिलक्ष्य वावशाना । अभिलषन्ती । वश कान्तौ । मायुं शब्दं

२२-७-११



'अम्बा' इति मिमाति करोति । पयोभिः स्रवद्भिः वत्सं प्रति पयते । पय गतौ ॥

गौः जलमयी कादम्बिनी, मूर्धानं गगनं मिषन्तं उन्मुखतया उत्कण्ठतया निरीक्षमाणं लोकाख्यं वत्समनुगताऽऽदौ अमीमेत् लघुशब्दं करोति । ततः मातवै स्वागमनं प्रमापयितुं हिङ्कारं गर्जनं करोति । सृक्वाणं सस्यस्रष्टारं कर्षकम् । सृजतीति सृक्वा । सृज विसर्गे । क्वनिप् । घर्मं ग्रीष्मतापेन तप्तम् अभिवावशाना सस्यसमृद्धं कर्तुं कामयमाना पयोभिः जलधाराभिः भुवमभिपयते अभिगच्छतीति ॥

श्रुतिसरस्वती मिषन्तं साधकं वत्समाह्वयति । मूर्धानं उपरि सर्वस्य मूर्ध्नि गतं भगवन्तं हिङ्कारेण गायन्ती, स्वगतां प्रीतिं द्योतयितुम् । 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि' इत्यादिनैतदवगम्यते । सन्तानं सृजन्तम् । संसारतप्तमुद्धर्तुकामा । माययति गमयति भगवन्तमिति मायुं मन्त्रजातमभिव्यनक्ति । मायुं जगन्निर्मातारं भगवन्तं वा गायति । अर्थरसपयोभिः पयते । पय गतौ ॥ २८ ॥

**अ॒यंसशि॑ङ्क्ते॒येन॒गौर॒भीवृ॑ता॒मिमा॑तिमा॒युन्ध्व॒सना॒वधि॑श्रि॒ता ।**
**साचि॒त्तिभि॒र्न्निहि॑च॒कार॒मर्त्त्यं॑वि॒द्युद्भव॑न्ती॒प्रति॑व॒व्रिमौहत॥ २९ ॥**

**अ॒यम् । सः । शि॒ङ्क्ते॒ । येन॑ । गौः । अ॒भि+वृ॑ता । मिमा॑ति । मा॒युम् ।**
**ध्व॒सनौ॑ । अधि॑ । श्रि॒ता ॥ सा । चि॒त्ति+भि॑ः । नि । हि । च॒कार॑ ।**
**मर्त्त्य॑म् । वि॒+द्युत् । भव॑न्ती । प्रति॑ । व॒व्रिम् । औ॒ह॒त॒ ॥ २९ ॥**

तृतीयचरणे 'मर्तियम्' इति विश्लेषेण केवला जगती । अयमपि गोस्तवः ।

सोऽयं वत्सः पयः पिपासुः शिङ्क्ते । अव्यक्तं नदति । शिजि अव्यक्ते शब्दे । येन गोरभितः परिवृता । गामावार्य अभितः सरन् धावति हि वत्सः । सा च मायुं प्रतिशब्दं निर्मिमाति करोति । ध्वसनौ गोष्ठे अधि-

श्रिता । ध्वनिं सनोतीति ध्वसनिः । सा चित्तिभिः वत्सलालनकर्मभिः मर्त्यमपि न्यकूचकार हि । वव्रिरिति रूपनाम । सा प्रतिदिनं विद्योतमाना भवन्ती स्वरूपं प्रकाशयामास । ऊह वितर्के ।

सोऽयं मेघः शिङ्क्ते । येन गौर्जलमावृतम् । जलगर्भो वृष्टिसन्नद्धो मेघ इत्यर्थः । गौरिति भूमिर्वा । ध्वसनौ मेघेऽधिश्रिता गौर्मायुमादित्यं परिमि-माति । आवृत्य परिमितं करोति । ध्वसनौ गगने वायौ वाऽधिश्रिता । मिनोति किरणजालं परिक्षिपतीति मयते सर्वत्र गच्छतीति वा मायुरादित्य उच्यते । सा चित्तिभिर्वर्षणकर्मभिः मर्त्यमवनतशिरसं चकार । सा च भूमिः सर्वतः सस्यरोहणकर्मभिः, एवं विद्योतमाना भवन्ती, जलरूपा गौर्वा स्वरूपं प्रकाशयतीति ।

स वेदपुरुषः शिङ्क्ते । अव्यक्तं भगवद्गुणान् गायति । सारत्वात् स इति स्वयं भगवानेव हयग्रीवः । आदिकविश्चतुर्मुखो वा । येन वाग् देवी आवृता । ध्वसनौ गगने अधिश्रिता वाक् नित्या मायुं भगवन्तं वायुं च स्तौति । 'नित्ययाऽनित्यया स्तौमि' । चित्तिभिर्ज्ञानैः सा मर्त्यं नि चकार हि । भगवति निहितं निरतं च चकार । भगवतः वव्रिं प्रति विद्युद् भवन्ती, भगवत्स्वरूपं विद्योतयन्ती स्वयमपि इदमित्थं भगवतो रूपमित्यौहत । अन्येषां चोहयामास ॥ २९ ॥

**अनच्छयेतुरगातुजीवमेजद्ध्रुवम्मद्ध्यऽआपस्त्यानाम् ।**
**जीवोमृतस्यचरतिस्वधाभिरमर्त्त्योमर्त्त्येनासयोनिः ॥ ३० ॥**

**अनत् । शये । तुर+गातु । जीवम् । एजत् । ध्रुवम् । मद्ध्ये । आ । पस्त्यानाम् ॥ जीवः । मृतस्य । चरति । स्वधाभिः । अमर्त्त्यः । मर्त्त्येन । स+योनिः ॥ ३० ॥ ६ ॥**

अत्र प्रथमपादे दशाक्षराणि । द्वितीये 'पस्तियानाम्' इति विश्लेषेण 'मद्धिये' इति च विश्लेषेण द्वादशाक्षरा । तेन पूर्वार्धे उभयोः संहत्य द्वाविंशदक्षरतेति

२२-७-११



छन्दःपूर्तिः । अथ तुरीयचरणे 'अमर्तियो मर्तियेन' इति विश्लेषेणैकदशाक्षरतेति केवला त्रिष्टुप् । अन्तर्यामी नारायणो देवता ।

यत् प्राणिति चेष्टते तदनत् । अन चेष्टायाम् । यत् जीवम्, जीवति प्राणान् धारयतीति, यच्च एजत् चलनशीलम्, यच्च तुरगातु त्वरितगमनशीलं जीवजातम्, तत् पस्त्यानां गेहस्थानीयानां देहानां मध्ये हृदयकमले ध्रुवं निश्चलं सत् आशेते । मर्त्येन शरीरेण समानयोनिरयं स्वयममर्त्यो जीवः मृतस्य शरीरस्य सम्बन्धिनीभिः, तत्पोषणहेतुभिः स्वधाभिरन्नैश्चरति । अथच अननादिषु जीवं प्रवर्तयत्, तं जीवयत् परं ब्रह्म ध्रुवं निश्चलं सत् जीवेन सह हृदयकमल आस्ते । अतः अमर्त्यो भगवान् मर्त्येन समानयोनिरास समानस्थानः । मृतस्य मरणशीलस्य जीवस्य जीवो जीवयिता भगवान् स्वधाभिः स्वरूपानन्दैश्च-रति । 'जीवापेतं वाव किलेदं म्रियते । न जीवो म्रियते' इति हि श्रुतिः । तत्र जीव इति हि भगवानुच्यते ॥ ३० ॥ ६ ॥

**॥ इति षष्ठो वर्ग्गः ॥**

**अपश्यङ्गोपामनिपद्यमानमाचपराचपथिभिश्चरन्तम् ।**
**ससध्रीचीस्सविषूचीर्वसानऽआवरीवर्त्तिभुवनेष्वन्तः ॥ ३१ ॥**

**अपश्यम् । गोपाम् । अनि+पद्यमानम् । आ । च । परा । च । पथिभिः । चरन्तम् ॥ सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्त्ति । भुवनेषु । अन्तरिति ॥ ३१ ॥**

'भुवनेषु+अन्तः' इति विश्लेषेण केवला त्रिष्टुप् । आदित्यः प्राणः नारायणश्च देवताः ।

अपश्यं गोप्तारम् कदाऽप्यविषण्णम् । पथिभिः प्रातरा चरन्तम् । सायं परा चरन्तम् । सध्र्यक् सह अञ्चन्तीति सध्रीचीनाः दिशः, विषूचीर्विदिशश्च

वसानः । भुवनेषु भूर्भुवःसुवराख्येषु उदयास्तमयौ कुर्वन् आ वरीवर्ति इत्यादित्यः ।

आ च परा च प्राणापानयोर्गत्या । सध्रीचीर्जीवततीः । सहगन्तॄन् विरुद्ध-गामिनश्च वसानः । दिक्षुविदुक्षु च व्याप्त इति प्राणः ।

अथ कपीनां गोपाम् । सुरसासिंहिकादिभिरनिपद्यमानम् । इन्द्रजिदादि-भिश्च । निपदनं तूष्णीम्भावः । सदा भगवत्कर्मणि उद्यतम् । लङ्कामभि आ च परा च गगनमार्गैश्चरन्तम् । राम इव दिक्षु विदिक्षु चायं वसन् शत्रून् संहरति । अयं स योऽयमन्तः प्राणः ।

अथ भरतानां गोपाम् । विषसर्पादिभिरप्यनिपद्यमानम् । रुद्रवरगुप्तैर्जरा-सन्धादिभिरपि । युद्धरङ्गे आ च परा च इतश्चेतश्च पथिभिश्चरन्तम् । सर्वासु दिक्षु शत्रून् संहरन्तमिव परैर्विस्मयेन वीक्षितम् ।

अथ सतां गोपाम् । तत्ववादस्य च । वेदवचसां च । पद्मतीर्थादिभिरनिपद्य-मानम् । सदा भगवत्पारम्यसमर्थने समुद्यतम् । आ सेतोराहिमाद्रेरा च परा च । तदपि तत्ववादपथैरेव । सर्वासु दिक्षु आवृण्वन् ।

अथ सर्वस्य गोप्तारं छन्दोगतं च प्राणं च नारायणं च । निरन्तरं विश्वनियमने निरतम् । आ समन्तात् पञ्च भूतेषु । पराक् पञ्चभूतान्यतीत्य जीवस्वरूपे नियमनार्थं चरन्तम् । भगवत्सन्दर्शितैः पथिभिश्चरन्तं प्राणम् । स्वेच्छानियतैः पथिभिर्नारायणम् ।

तथाह्यैतरेय्यामुपनिषदि– 'अपश्यं गोपामिति । एष वै गोपा एष हीदं सर्वं गोपायति । अनिपद्यमानमिति । न ह्येष कदाचन संविशति । आ च परा च पथिभिश्चरन्तमिति । आ च ह्येष परा च पथिभिश्चरति । स सध्रीचीः स विषूचीर्वसान इति । सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिशः । आवरीवर्ति भुवनेष्वन्तरिति । एष ह्यन्तर्भुवनेष्वावरीवर्ति' इति ।

२२-७-११



तथाहि प्राचीनम्–

'छन्दस्सु संस्थितो विष्णुर्गोपायत्येव तद्धिदम् ।
'मन्त्रोऽप्यर्थमिमं प्राहापश्यं गोपामिति स्म ह ॥

'एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः ।
'छन्दस्सु संस्थितो वायुर्वायौ स च जनार्दनः ॥

'वायुश्च वायुसंस्थश्च कदाचिन्न हि तिष्ठतः ।
'वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान् ॥

'चोदितः केशवेनैव तत्स्थेनामितशक्तिना ।
'आ समन्तात् पराक् चापि पञ्चभूतेभ्य ईश्वरः ॥

'वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः ।
'सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि ॥

'नित्यदा वसतः कोणादिष्वथापि विषूचिषु ।
'अन्तश्च सर्वभूतेषु चरतो लोकसाक्षिणौ' इति ॥ ३१ ॥

**यऽईंञ्चकारनसोऽअस्यवेंदयऽईन्ददर्शहिरुगिन्नुतस्मात् ।**
**समातुर्य्योंनापरिंवीतोऽअन्तर्बहुप्रजानिरृंतिमाविंवेश ॥ ३२ ॥**

**यः । ईम् । चकारं । न । सः । अस्य । वेद । यः । ईम् । ददर्शं ।**
**हिरुंक् । इत् । नु । तस्मांत् ॥ सः । मातुः । योनां । परिं+वीतः ।**
**अन्तः । बहु+प्रजाः । निः+ऋतिम् । आ । विवेश ॥ ३२ ॥**

स्फुटं त्रिष्टुप् । जीवान्तर्यामिणौ प्राणनारायणौ देवते ।

ईमेनमिति व्याचक्षते । ईमेवेत्याचार्याः । य एव यत्किञ्चित् चकार, ईम् इदानीम्, अस्मिन् जन्मनि । जन्मान्तरे, लोकान्तरे वा, अस्मिन्नेव लोके अस्मिन्नेव वा जन्मनि कीदृशोऽस्योदर्को भविष्यतीति न स वेद । य एवेदानीं किञ्चिद् ददर्श पत्नीपुत्रादिकं वा पुण्यक्षेत्रादिकं वा तस्माद्धिरुगित् पृथगेव

किल स भवति । यदत्र दृष्टं न तत् परत्र जन्मनि लोके वा । यश्चकार यश्च ददर्श स मातुर्योनौ प्रविष्टः उल्बेन जरायुणा च परिवीतः गर्भे अन्तः निर्ऋतिं दुःखातिशयमाविवेश । एवं बहुधा प्रजायमानो दुःखाद् दुःखं याति । जातश्च पुनर्बहुधा प्रजायमानः, एकैकस्मिन्नपि जन्मनि बह्वपत्यानां प्रजनयिता सन् दुःखमेव विशति ।

यः पिता इदं शरीरं चकार स नामुं जीवं वेद । कुतोऽयमागतः? कस्मान्मद्वीर्यमनुविश्य जायाशरीरेण जायते? कीदृशोऽयम्? किंल्लिङ्गोऽयम्? किम्प्रकृतिरयम्? किंरूपोऽयम्? नैतत् किमपि वेद । य एव च जननानन्तरं जीवपिण्डं ददर्श तदानीमप्ययं तस्माद् द्रष्टुः हिरुगन्तर्हित एव नु । यस्तस्मात् दृष्टात् पिण्डात् हिरुगित् पृथगेव अन्तरेवान्तर्हितो भवति । अन्यत् समानम् । स मातुर्योनौ परिवर्तमान एव भवति । यावत् न पश्यति । अथ पश्यति अथ मुच्यते ।

यो वायुः इदं वृष्ट्युदकं चकार । न स वेद अहमेतदकरवमिति, जडत्वात् । तस्माद् वायुना करणेन वृष्ट्युदककर्ता कश्चन चेतनः परमपुरुषोऽस्तीति गम्यते । य एतत् सर्वं ददर्श साक्षी भूत्वा स हिरुक् सर्वस्माद् विलक्षणः, आदित्यान्तर्निगूढः प्राणो नारायणश्च । एनमजानन् जीवो मातुर्योनौ परिवीतो निरृतिमाविवेशेति । स च पुनर्जातः बहुप्रजाः सन् निरृतिं भूमिमाविवेशेति ॥ ३२ ॥

**द्यौर्म्मे॑पि॒ताज॑नि॒तानाभि॑रत्र॒बन्धु॑र्म्मेमा॒तापृ॑थि॒वीम॒हीयम् ।**
**उ॒त्ता॒नयो॑श्च॒म्वो॒३॒र्य्योनि॑र॒न्तरत्रा॑पि॒तादु॑हि॒तुर्ग्गर्भ॒माधा॑त् ॥ ३३ ॥**

**द्यौः । मे॒ । पि॒ता । ज॒नि॒ता । नाभि॑ः । अत्र॑ । बन्धु॑ः । मे॒ । मा॒ता ।**
**पृ॒थि॒वी । म॒ही । इ॒यम् ॥ उ॒त्ता॒नयो॑ः । च॒म्वो॑ः । योनि॑ः । अ॒न्तः ।**
**अत्र॑ । पि॒ता । दु॒हि॒तुः । गर्भ॑म् । आ । अ॒धा॒त् ॥ ३३ ॥**

‘चमुवोः’ इति विश्लेषेण केवला त्रिष्टुप् । प्राणनारायणौ स्तूयेते ।

२२-७-११



दीर्घतमा ब्रवीति द्यौर्मे पिता पृथिवी मातेति । पातृत्वात् पिता च जनयिता च । यतोऽत्र द्यवि नाभिः जननाश्रयो जलरसः । जलेन वृष्टिः । वृष्टेरन्नम् । अन्नाद् वीर्यम् । ततः प्रजा इति । तस्माज्जनयिता । पार्थिवेन शरीरेण बध्नातीति बन्धुः पृथिवी महतीयं माता । अस्या गर्भादेव हि जननम् । स्त्रीपुंसयोः समागमे एकस्य घटकस्य उत्तानत्वमपरस्याधस्तनत्वं भवति । अत्रोभयोरुत्तानत्वम् । ऊर्ध्वगतिहेतुत्वात् । चमु अदने । चमत इति चम्वौ । तयोश्चम्वोः अत्त्र्योः । अत्र हुतं द्यौरत्ति । ततो वृष्ट्या निष्पन्नं भूमिरत्ति । ‘देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ’ इति स्मरणात् । द्यावापृथिव्योरन्तर्मध्ये सर्वभूतयोनिरन्तरिक्षं भवति । अन्तरिक्षे हि वर्धते । अथ च चित्रमेतत् पिता द्युलोकः दुहितुर्गर्भमाधत्त इति । दूरे निहिता भूमिर्दुहितोच्यते । सस्यादिकं दोग्धीति च दुहितोच्यते ।

द्योतत इति द्यौः सूर्यो नः पिता । सूर्यो भूमेर्जलमत्ति । भूमिश्च सूर्यात् । अथच भूमेः पिता पर्जन्यः । अद्भ्यः पृथिवीति श्रुतेर्दुहिता पृथिवी ।

द्योतत इति द्यौः प्राणश्च नारायणश्च । नाभिराश्रयश्च । पृथिवी मही भारती लक्ष्मीश्च । ऊर्ध्वं तानयत इत्युत्तानयोः विश्वस्य अत्त्रोः भारतीमुख्यप्राणयोर्लक्ष्मीनारायणयोर्वा योनिरभिव्यक्तिस्थानं हृद्यन्तः । य एषोऽन्तर्हृदय आकाशः । अत्र पुंसि स्थितः पिता प्राणो नारायणश्च सन्ततिं दोग्धीति दुहितुः, दुहितृकल्पाया वा स्त्रिया गर्भमाधात् ॥ ३३ ॥

**पृ॒च्छामि॑त्वा॒प॒रमन्त॑म्पृथि॒व्याःपृ॒च्छामि॒यत्र॒भुव॑नस्य॒नाभि॑ः ।**
**पृ॒च्छामि॑त्वा॒वृष्णो॒ऽअश्व॑स्य॒रेत॑ःपृ॒च्छामि॑वा॒चःप॑र॒मंव्यो॑म ॥ ३४ ॥**

**पृ॒च्छामि॑ । त्वा॒ । पर॑म् । अन्त॑म् । पृ॒थि॒व्याः । पृ॒च्छामि॑ । यत्र॑ ।**
**भुव॑नस्य । नाभि॑ः ॥ पृ॒च्छामि॑ । त्वा॒ । वृष्ण॑ः । अश्व॑स्य । रेत॑ः ।**
**पृ॒च्छामि॑ । वा॒चः । प॒र॒मम् । वि+ओ॑म ॥ ३४ ॥**

‘वियोम’ इति विश्लेषेण केवला त्रिष्टुप्। चतुर्मूर्तिविषयो ब्रह्मवायुविषयश्चायं प्रश्न इति त एवात्र देवताः ।

पृथिव्याः प्रकृतेः तमसः परस्तात् किमस्तीति पृच्छामि त्वा यजमानमित्याह दीर्घतमाः । विश्वस्य नाभिराश्रयः यत्राऽश्रितस्तं च पृच्छामि । यत्र सर्वं सम्बद्धं तं पृच्छामि । रेतोवर्षणकर्तुरश्वस्य रेतः किम्। यत्र सर्वा वाच ओता तदपि किमिति पृच्छामि ॥ ३४ ॥

**इयंवेदिःपरोऽअन्तःपृथिव्याऽअयंयज्ञोभुवनस्यनाभिः ।**
**अयंसोमोवृष्णोऽअश्वस्यरेतोब्रह्मायंवाचःपरमंव्योम ॥ ३५ ॥**

**इयम् । वेदिः । परः । अन्तः । पृथिव्याः । अयम् । यज्ञः । भुवनस्य । नाभिः ॥ अयम् । सोमः । वृष्णः । अश्वस्य । रेतः । ब्रह्मा । अयम् । वाचः । परमम् । विऽओम ॥ ३५ ॥ ७ ॥**

त्रिष्टुप् छन्दः । प्रथमतृतीयचरणावेकादशाक्षरौ । ‘वियोम’ इति विश्लेषेण तुरीयोऽपि। द्वितीयः परं दशाक्षरः। ततो निचृत् त्रिष्टुबिति युक्तम्। वासुदेव-सङ्कर्षणप्रद्युम्नानिरुद्धाः विष्णुनरसिंहभार्गवहयग्रीवा ब्रह्मवायू च देवताः ।

इयं वेदिः परो अन्तः पृथिव्याः । ‘एतावती वै पृथिवी यावती वेदिः’ । इयं वेदिरेव परो अन्तः । पृथिव्यां यद्यत् साध्यं तत् सर्वमस्यां साध्यत इति । इयं वेदिः वेदिस्थः अग्निस्थः परशुरामः, दुर्गायां सन्निहितः नृसिंहः सङ्कर्षणो वा पृथिव्याः प्रकृतेः तमसः परस्तादिति गुह्यभाषा। यज्ञः जीवजातस्याऽश्रयः । ‘यज्ञो वै विष्णुः’, ‘यज्ञेन यज्ञमयजन्त’ इति श्रुतेः जगत्पालनाय धृतविष्णुरूपो नारायणो भुवनस्य नाभिः । अनिरुद्धश्च । अश्वस्य, ‘तत् सृष्ट्वा तदेवानुप्राविशत्’ इत्युक्तदिशा जगत्सृष्ट्वा तत्र विततस्य प्रद्युम्नस्य रेतः सोमः पवमानः । उत्कृष्टया मया भगवत्प्रज्ञया सहितः सोमः समग्रवेदः

२२-७-११



अश्वस्य हयग्रीवस्य रेतः । ‘अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः’ इत्युक्तदिशा सोमरसश्च। ब्रह्मान्तर्गतः ब्रह्मणः पिता वासुदेवः वाचः परमं व्योम उत्कृष्टं रक्षकम्। अर्थो हि वाचो रक्षा । सर्वपदवाच्य इत्येतत् । तदनन्तरं चतुर्मुखश्च ॥ ३५ ॥ ७ ॥

**॥ इति सप्तमो वर्ग्गः ॥**

**सप्तार्द्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठन्तिप्रदिशाविधर्म्मणि ।**
**तेधीतिभिर्म्मनसातेविपश्चितःपरिभुवःपरिभवन्तिविश्वतः ॥**
**॥ ३६ ॥**

**सप्त । अर्द्ध+गर्भाः । भुवनस्य । रेतः । विष्णोः । तिष्ठन्ति । प्र+दिशा । वि+धर्म्मणि ॥ ते । धीति+भिः । मनसा । ते । विपः+चितः । परि+भुवः । परि । भवन्ति । विश्वतः ॥ ३६ ॥**

अत्र जगती छन्दः । प्रथमचरणे । सप्त+अर्धगर्भाः’ इति विश्लेषेण छन्दः-पूर्तिः । ब्रह्माद्याः सप्त तत्वमानिनो विष्णुश्च देवताः ।

भुवनस्य विष्णोः रेतोरूपाः । ततो जाता इत्यर्थः । कथं भुवनस्य? भूमत्वाद् वननीयत्वाच्च भुवनो विष्णुः । आ ऋद्धमर्द्धम् । ब्रह्माण्डम् । तस्य गर्भ-भूताः । सप्त देवाः ब्रह्मवायू महन्मानिनौ । अहङ्कारमानिनः गरुडशेषरुद्राः, मनोमानिनाविन्द्रकामौ चेति सप्त देवाः । महदहङ्कारौ पञ्चभूतानि चेति वा सप्त । तदभिमानिग्रहणम् । एते सप्त देवा अपि भुवनस्य रेतसः रति-कराः । एते विष्णोः प्रदिशा आदेशेन विविधव्यापारेषु तिष्ठन्ति । अत्र तत्वदीपिका–‘सप्त महदादिदेवता ब्रह्मादयः। अर्द्धाः आ समन्तादृद्धाः, गर्भा गरणेन भ्रियन्त इति । भूमा वननीयश्चेति भुवनः । भुवनस्य विष्णोः रेतो रूपाश्च ते तस्यैव प्रदिशा प्रदेशेनाऽदेशेनाऽज्ञया विविधधर्मणि तिष्ठन्ति’ इति । ते देवाः धीतिभिः विज्ञानैः, ध्यानैश्च, मनसा मननेन च, जगद्विषये प्रीत्या च। विश्वतः विश्वं परि भवन्ति। परिभूय सर्वोपरि तिष्ठन्ति। अतस्त

एव परिभुवः विपश्चितः । सर्वाधिका विद्वांसः । अथ च सप्त देवा अर्द्धस्य विष्णोर्गर्भाः । विष्णोर्जाताः भुवनस्य रेतः कारणभूताः । ते विष्णोः प्रदिशा विधर्मणि तिष्ठन्तीति च ॥ ३६ ॥

**नविजा॑नामि॒यदि॑वे॒दमस्मि॑नि॒ण्यस्सन्न॑द्धो॒मन॑साचरामि ।**

**य॒दामाग॑न्प्रथम॒जाऽऋ॒तस्यादिद्वा॒चोऽअ॑श्नुवेभा॒गम॒स्याः ॥ ३७ ॥**

**न । वि । जा॒ना॒मि॒ । यत्+इ॑व । इ॒दम् । अस्मि॒ । नि॒ण्यः । सम्+न॑द्धः । मन॑सा । च॒रा॒मि॒ ॥ य॒दा । मा॒ । आ । अग॑न् । प्र॒थ॒म॒+जाः । ऋ॒तस्य॑ । आत् । इत् । वा॒चः । अ॒श्नु॒वे॒ । भा॒गम् । अ॒स्याः ॥ ३७ ॥**

‘ऋतस्य+आदित्’ इति पादयोर्विश्लेषेण केवला त्रिष्टुप् । ब्रह्मवायू नारायणश्च देवताः ।

इदं ज्ञानानन्दादिमयं यदिव यादृशोऽहमस्मि तन्न विजानामि । यदिदमहमस्मि तत् किमिव कीदृशमित्यहं न जानामि । यतोऽहं निण्यः पिहितस्वरूपः । स्वरूपाज्ञोऽहं मूढ इत्येतत् । मनसा विषयचारिणा सम्बद्धः विषयप्रपञ्च एव चरामि । यदा ऋतस्य प्रथमजाः वायुर्ब्रह्मा वा । ‘अहमस्मि प्रथमजा ऋतस्य’ इति हि तैत्तिरीया आमनन्ति । मा मामागन् गुरुत्वेनानुग्रहीतुमागन्ता, जीवमानित्वात्, स्वरूपोद्दिधीर्षया स चेदागत्य मम पन्थानं दर्शयति, आत् इत् तस्मादेव कारणात्, गुर्वनुग्रहादनन्तरमेव अस्या वाचः भागं भजनीयमर्थं परमपुरुषाख्यमश्नुवे प्राप्नोमीत्यर्थः ॥ ३७ ॥

**अपा॒ङ्प्राङे॑तिस्व॒धया॑गृभी॒तोम॑र्त्यो॒मर्त्ये॑ना॒सयो॑निः ।**

**ताशश्व॑न्ताविषू॒चीना॑वि॒यन्ता॒न्य१॒॑न्यं॑चि॒क्युर्न्ननिचि॑क्यु॒रन्यम् ॥**

**॥ ३८ ॥**

**अपा॑ङ् । प्राङ् । ए॒ति॒ । स्व॒धया॑ । गृ॒भी॒तः । अम॑र्त्यः । मर्त्ये॑न । स+यो॑निः ॥ ता । शश्व॑न्ता । वि॒षू॒चीना॑ । वि॒+यन्ता॑ । नि । अ॒न्यम् । चि॒क्युः । न । नि । चि॒क्युः । अ॒न्यम् ॥ ३८ ॥**

२२-७-११



द्वितीयचरणे–‘अमर्त्तियो मर्तियेना सयोनिः’ इति विश्लेषेण–‘न्या अन्यम्’ इति तुरीये केवला त्रिष्टुप् । प्राणापानौ नारायणश्च देवता ।

अत्र ऐतरेयी उपनिषत्–‘स एष मृत्युश्चैवामृतं च । तदुक्तमृषिणा–अपाङ् प्राङेति स्वधया गृभीत इति । अपानेन ह्ययं यतः प्राणो न पराङ् भवति । अमर्त्यो मर्त्येना सयोनिरिति । एतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी३ । अमृतैषा देवता । ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यमिति । निचिन्वन्ति हैवेमानि शरीराणी३ । अमृतैवैषा देवता । अमृतो हवा अमुष्मिन् लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद’ इति ।

ऋक्संहितावचनं च भाष्ये–

‘स एष भगवान् विष्णुर्मृत्युदो मोक्षदस्तथा ।
‘स एव जीवनकरो यदाऽपानेन संयुतः ॥

‘प्राणं नियमयत्यस्मिन् शरीरे पुरुषोत्तमः ।
‘शरीराद् बहिरेतौ तु यदा निःसारयत्यजः ॥

‘तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम् ।
‘प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः ॥

‘अपाक् प्राक् च सदा गच्छेत् वायुरानन्दरूपिणा ।
‘अनेनैव गृहीतो हि प्राणोऽपानेन संयुतः ॥

‘अनेन हरिणा यस्मान्नियतो न पराङ् भवेत् ।
‘अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः ॥

‘अनित्या अपि देहास्ते शश्वत् सन्त्या विमोक्षतः ।
‘स्थूलसूक्ष्मविभागेन किमु वायुर्जगत्प्रभुः ॥

‘नानागती च तावेतौ वायुः प्राप्नोति केशवम् ।
‘शरीरं तु विनष्टं सत् पञ्चत्वमुपगच्छति ॥

'जडं तज्जडतामेति चेतना वायुदेवता ।
'चेतनेशं हरिं याति विरुद्धगमनौ च तौ ॥

'ऊर्ध्वं गच्छति वायुः स देहोऽधः पतति क्षितौ ।
'दृश्यमेतच्छरीरं चाप्यदृश्यो वायुदेवता ॥

'य एवं वेद तं वायुममृतं सर्वनायकम् ।
'पूर्णानन्देन हरिणा गृहीतं तद्वशं सदा ।
'स मुक्तो लोकमाप्नोति विष्णोर्मुक्तैश्च गम्यते' इति ।

अमयर्थः– स्वानन्देन स्वयमेव धत्ते स्वात्मानमिति स्वधा भगवान् । तेन गृहीतः नियतः प्राणश्च अपानश्च । अथ च स्वधया अपानेन गृहीतः सहितः प्राणः अपाक् च प्राक् चेति । कथमपानः स्वधा । स्वेन स्वतन्त्रेण भगवता तदनुग्रहेण स्वीयं स्वाधीनं जगद् धत्त इति । अयममर्त्यो वायुः प्राणापानात्मा मर्त्येन शरीरेण सहैवात्र भवति । तस्मात् शरीरेण सयोनिः समानस्थानः । अमर्त्य इति नारायणश्च । तदुक्तम्–'प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' इति । अथापि तौ देहश्च प्राणश्च शश्वन्तौ । नित्यत्वात् प्राणः शाश्वतः । देहोऽपि स्थूलः सूक्ष्मश्च आमोक्षं वर्तत इति प्रवाहतः शाश्वतः । विषूचीनौ विरुद्धगमनौ च तौ । वायुः केशवं प्राप्नोति । देहश्च स्वकारणानि पञ्च भूतान्याप्नोति । तज्जडमयं चेतनः । विरुद्धं यात इति वियन्तौ च तौ । वायुरूर्ध्वं गच्छति । देहोऽधः पतति । देहं सर्वेऽपि निचिक्युः पश्यन्ति । अन्यं प्राणं न निचिक्युरिति ॥

अथ जीवपरतया–स्वधया भगवता, प्राणेन, अन्नेन, अन्नमयशरीरेण च गृहीतः अयं जीवः पापेन कर्मणा अपाङेति । पुण्येन प्राङ् ऊर्ध्वमेति । एवं परलोके सूक्ष्मशरीरेण इह च स्थूलशरीरेण मर्त्येन सहैवाऽस्ते । अथापि तौ जीवश्च तद्देहश्च शश्वन्तावित्यादि समानम् ॥ ३८ ॥

२२-७-११



**ऋचोऽअक्षरेपरमेव्योमन्यस्मिन्देवाऽअधिविश्वेनिषेदुः ।**
**यस्तन्नवेदकिमृचाकरिष्यतियऽइत्तद्विदुस्तऽइमेसमासते ॥ ३९ ॥**

**ऋचः । अक्षरे । परमे । वि+ओमन् । यस्मिन् । देवाः । अधि । विश्वे । नि+सेदुः ॥ यः । तत् । न । वेद । किम् । ऋचा । करिष्यति । ये । इत् । तत् । विदुः । ते । इमे । सम् । आसते ॥ ३९ ॥**

अत्र केवलां त्रिष्टुभममाह सर्वानुक्रमणीकारः, 'वियोमन्' इति पूर्वार्धे त्रिष्टुबेव । उत्तरार्धस्य तु पादद्वयेऽपि द्वादशाक्षरत्वात् जगत्युत्तरा स्वराट्त्रिष्टुबिति युक्तम् । ओङ्कारवाच्यो नारायणो देवता ।

ऋचः सर्वाः, सर्वे वेदा ओमित्येकस्मिन् सर्वतः परमे अक्षरे व्योमन् यस्मिन् सर्वाण्यक्षराणि ओतानि तस्मिन्नेकाक्षरे प्रतिष्ठिताः । ओङ्कारव्याख्यानत्वात् सर्ववाचाम् ।

अथच यस्मिन् परमेऽक्षरे नारायणे सर्वा ऋचः प्रतिष्ठिताः । 'अक्षरात् परतः परः' इति श्रवणात् । 'अथ परा यया तदक्षरमधिगम्यते' इति च । नन्विन्द्राग्न्यादिपदानि अन्यत्र गतानीति कथं सर्वा ऋचः परमेऽक्षरे । आह– यस्मिन् । सर्वे वेदोदिता देवाः । अधि सर्वाधिके यस्मिन् अधि अधीनतया नीचैः स्थिताः । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' । तस्मादिन्द्राग्न्यादिनामानि तस्यैव नामानीत्यर्थः ।

यस्मिन् ओङ्कारे सर्वे देवा अधिनिषेदुः आश्रिताः । ओङ्कारवाच्ये नारायणे आश्रितत्वात् सर्वे देवा ओङ्काराश्रिता इत्युच्यन्ते । ओङ्कारोपासकत्वेन वा । वेदा वा देवा अत्रोक्ताः ।

यस्तत् ओमित्यक्षरं, अक्षरवाच्यमक्षरं ब्रह्म वा न वेद स किमृचा करिष्यति अधीतया? य एव तद्विदुस्त इमे भगवता सह सङ्गता आसते ।

अक्षरे इति सप्तमी पञ्चम्यर्थे वा । यस्मादक्षरात् सर्वा ऋचः समुद्गता इति । अन्यत् समानम् ॥ ३९ ॥

**सूयवसाद्भगवतीहिभूयाऽअथोवयम्भगवन्तस्स्याम ।**
**अद्धितृणमघ्न्येविश्वदानीम्पिबशुद्धमुदकमाचरन्ती ॥ ४० ॥**

**सुयवस+अत् । भग+वती । हि । भूयाः । अथोइति । वयम् ।**
**भग+वन्तः । स्याम ॥ अद्धि । तृणम् । अघ्न्ये । विश्व+दानीम् ।**
**पिब । शुद्धम् । उदकम् । आ+चरन्ती ॥ ४० ॥ ८ ॥**

द्वितीयचरणे 'सियाम' इति, तृतीये 'अघ्निय' इति च विश्लेषेण केवला त्रिष्टुप् । गवादिगतो भगवान्नारायणो देवता । धेनुभूवाचश्च ।

'वाश्यमानायै यवसं प्रयच्छेत् सूयवसाद् भगवती हि भूयाः' इत्याश्वलायनश्रौत-सूत्रम् । सुयवसमत्तीति सुयवसात् । संहितायामाधिक्यार्थं दैर्घ्यम् । सुयवसा-दिनी भाग्यवती हि भव । अथ तव भाग्येन वयं भगवन्तः स्याम भाग्यशालिनः । विश्वदानीं सर्वदानीं, सर्वदेति यावत्, तृणमद्धि खाद, हे अघ्न्ये, अहन्तव्ये धेनो, आ परितश्चरन्ती शुद्धमुदकं पिब ।

गोरूपा भूः स्तूयते । सुयवसात् । शोभनं भोज्यमादयित्री भव । तेन वयं सुभोज्येन भगवन्तः स्याम । यदस्माकं तृणं तृणोति अत्ति अर्दयति वा तादृशं दुरितं नाशय । तृणवत् करोति इत्यस्मानल्पीकुर्वद् वा । अद्धि नाशय । शुद्धं जलं तत्वज्ञानरूपं पायय ।

अथ गौर्वेदवाक् । सुयवसं ज्ञानरत्याख्यमन्नमादयित्री भव । तृणत्ति इति तृणमज्ञानम् । तृणु कात्करणे । 'पराञ्चि खानि व्यतृणत्' इति काठके । अघ्न्या अपौरुषेयत्वात् । उदकं ज्ञानरसान्नरतिजां तृप्तिं पायय । 'ज्ञानान्नं ज्ञानबलतः श्रेष्ठं ज्ञानरतिर्हि तत् । आपश्च द्विविधाः प्रोक्तास्तृप्तिर्या ज्ञानतो

२२-७-११



रतेः । ता ज्ञेया आन्तरा आपो बाह्यास्तु द्रवरूपकाः' इति च्छन्दोग-भाष्ये ॥ ४० ॥ ८ ॥

**॥ इत्यष्टमो वर्ग्गः ॥**

**गौरीम्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ।**
**अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ ४१ ॥**

**गौरीः । मिमाय । सलिलानि । तक्षती । एक+पदी । द्वि+पदी । सा ।**
**चतुः+पदी ॥ अष्टा+पदी । नव+पदी । बभूवुषी । सहस्र+अक्षरा ।**
**परमे । विऽ+ओमन् ॥ ४१ ॥**

मन्त्रोऽयं जागत इत्यनुक्रमणिका । जगतीबाहुल्यात् । चतुर्थः पाद एक-स्त्रैष्टुभः । तक्षति+एकपदी इति पूर्वोत्तरपादयोर्विश्लेषेण पूर्वार्धं जागतम् । तृतीयपादः स्फुटं जागतः । तुरीयचरणेऽपि 'सहस्र+अक्षरा', 'वि+ओमन्' इति विश्लेषेण केवला जगती भवति । तथाह्यनुक्रमणिका– पञ्चपादम्(१२), साकञ्जानाम् (१५), यद्गायत्रे (२३), अयं स शिङ्क्ते (२९), सप्तार्द्धगर्भा (३६), गौरीः (४१) इति जगत्यः' इति । शिष्टाः (१–११, १३, १४, १६–२२, २४–२८, ३०, ३५, ३७–४०) त्रिष्टुभ इत्यर्थः । देवताविषये चाऽह–'एतदन्तं वैश्वदेवम्' इति ।

विश्वदेवदेवत्योऽयं मन्त्र इत्यनुक्रमणिका । सर्वे देवा इति किल तदा-शयः । नात्र विश्वेषां देवानां विशिष्य प्रस्तावो दृश्यते । वाचः स्तुतिरिति मुखतोऽवगम्यते । तस्माद् वाग्देव्यौ सरस्वतीभारत्यौ देवते इति तत्व-वादिनः । तथाहि भगवत्पाद आचार्यो मध्व आह तन्त्रसारसङ्ग्रहे–'ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ । मन्त्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ' [४.७१] इति । परममुख्यतः रमानारायणौ च ।

गौरीः गौरी, अलुप्तसुः प्रयोगः । सर्वशुक्ला सरस्वती भारती वा । परशुक्लत्रयान्तर्भावात् । सलिलानि तक्षती । 'आपः पुरुषवचसो भवन्ति' इति

श्रवणात् सलिलानि शरीराणि रूपयन्ती भूतजातं निर्मिमाय । तस्याः प्रकृतिमानित्वात् । विशेषतः पृथिव्यप्तेजस्सु सन्निधाय मूर्तिं रचयतीत्यर्थः । 'तस्मान्मूर्तिरेव रयिः' इति श्रवणात् । तक्षणेन रूपं ददती शरीराणि निर्मिमायेति वा ।

उक्तं रूपव्याकरणम् । सम्प्रति नामव्याकरणमुच्यते । वेदमानिनी सत्येकपदी बभूव । एकमेव नारायणाख्यं ब्रह्म मुख्यं पदं प्रतिपाद्यमस्या इति । एष एव करोतीति सर्वकर्ता सर्वप्रधानो ह्येक उच्यते । सैव द्विपदी बभूव । अन्तर्यामिणं सर्वगतं च प्रतिपादयन्ती । जगच्च जगन्नाथं च भेदेन प्रतिपादयन्ती । 'द्विशब्दो द्वित्वसङ्ख्यायां भेदे चापि प्रयुज्यते' इत्यभिधानात् । पौरुषेयापौरुषेयभेदेन च द्विपदी । सा चतुष्पदी । विश्वादिवासुदेवादिचतूरूपं भगवन्तं प्रतिपादन्यती । मुख्यामुख्यार्थभेदेन च द्विपदी । व्यक्ताव्यक्तभेदेन च द्विपदी । नामाख्यातोपसर्गनिपातभेदेन च चतुष्पदी । ओमित्येकपदी । षणकाराभ्यां द्विपदी । 'णकारो बलम् । षकारः प्राण आत्मा' इति श्रवणात् । चतसृभिर्व्याहृतिभिश्चतुष्पदी । अकारोकारमकारनादैर्वा । नारायण इति वा । ऋगादिशाखाभेदेन वा चतुष्पदी ।

अथ चैकपादा ऋग् भवति–'भद्रं नो अपि वातय मनः' (ऋ.सं.१०.२०.१) इति । द्विपदा यथा–'पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः' [ऋ.सं.९.६७.१६] । चतुष्पादा अनुष्टुबाद्या भवन्ति ।

अष्टापदी बभूवुषी भवन्ती प्रकृतिमानित्वेन । 'भिन्ना प्रकृतिरष्टधा' इति ह्याह । ओं नमो नारायणायेत्यष्टापदी । अपौरुषेयवेदाश्चत्वारः पौरुषेयाश्चत्वार इत्यष्टापदी । भारतम्, पञ्चरात्रम्, मूलरामायणं पुराणानि चेति पौरुषेयाश्चत्वारः । सम्बोधनेन सह सप्तभिर्विभक्तिभिर्वा ।

नवन्नवं गुणजातं प्रतिपादयन्ती नवपदी । अष्टप्रकृतिगतै रूपैः मूलरूपेण सह वा नवपदी । सहस्राक्षरा अनन्तमक्षरं प्रतिपादयन्ती, अक्षरस्यानन्तानि नामानि रूपाणि प्रतिपादयन्ती, सहस्राणि वा नामानि । एवं परमे व्योम्नि

२२-७-११



हृदयाकाशे, सर्वगते वा भगवति स्थिता । अन्तरिक्षे वा । अन्तरिक्षस्याक्षरगुणकत्वात् ।

गौरीर्नारायणश्च । वेदोद्गिरणात् । स्त्रीलिङ्गेन परदेवतात्वं गमयति । अथच रमाऽपि गौरी । सलिलानि तक्षतीति समानम् । प्रळयजलधिसलिलानि च तक्षति रूपाधानाय । एकपदी ओमिति । द्विपदी हरिरिति विष्णुरिति । चतुष्पदी नारायण इति वासुदेव इति । स्वयं च तावद्रूपवान् बुभूषुः ।

अष्टापदी याजुष्याऽनुष्टुभा स्तूयमाना । नवपद्या बृहत्या च । सहस्राक्षरा अनन्तरूपा । परमे व्योमन् ज्ञानरूपे स्वस्मिन् प्रतिष्ठिता । वैकुण्ठे वा ॥ ४१ ॥

**तस्या॑स्समु॒द्राऽअधि॒विक्ष॑रन्ति॒तेन॑जीवन्तिप्र॒दिश॒श्चत॑स्रः ।**
**तत॑ःक्षरत्य॒क्ष॒रंतद्विश्व॒मुप॑जीवति ॥ ४२ ॥**

**तस्या॑ः । स॒मु॒द्राः । अधि॑ । वि । क्ष॒रन्ति॒ । तेन॑ । जी॒व॒न्ति॒ । प्र॒+ दिश॑ः । चत॑स्रः ॥ तत॑ः । क्ष॒र॒ति॒ । अ॒क्षर॑म् । तत् । विश्व॑म् । उप॑ । जी॒व॒ति॒ ॥ ४२ ॥**

'तस्याः समुद्रा इति वाचः समुद्राः । आपोऽक्षरम् । सा प्रस्तारपङ्क्तिः' इत्यनुक्रमणिका । समुद्रा इत्युक्ता वाचः । आपोऽक्षरम् । ततः क्षरत्यक्षरमित्यक्षरशब्देनाऽप उच्यन्ते' इति षड्गुरुशिष्यः । 'आद्यौ द्वादशकौ पादावष्टकौ च परौ यदि । प्रस्तारपङ्क्तिः स प्रोक्ता' इति च ।

तथाचास्मिन् मन्त्रे प्रस्तारपङ्क्तिश्छन्दः । यद्यप्यत्र पूर्वार्धं त्रैष्टुभम् । विश्लेषेण जागतत्वं सम्पाद्यम् । 'तसियाः' इति प्रथमपादे द्वादशाक्षरता । 'चतस्रः' इति द्वितीयपादे । 'क्षरति+अक्षरम्' इति विश्लेषेण तृतीयोऽप्यष्टाक्षरो भवति । वस्तुत आद्यौ त्रैष्टुभौ चेदपि प्रस्तारपङ्क्तिरेवेति सूक्तम् ।

पूर्वार्धस्य वाग् देवता । उत्तरस्यार्धस्याऽप इत्यनुक्रमणिका । समग्रस्य वाग् देवतेति तत्ववादिनः ।

तस्या वाग्देवतायाः सरस्वतीभारत्योर्लक्ष्मीनारायणयोश्च । समुद्रिक्ताः सम्पूर्ण-जला मेघा अधि विक्षरन्ति । ऋग्भिस्तुता देवा मेघैर्जलं वर्षयन्तीत्यर्थः । तेन जीवन्ति दिक्षु विदिक्षु च गताश्चेतनाः । यतस्ततो मेघैरक्षरमक्षयं जलं क्षरति । तद् वृष्टं जलमेव सर्वमिदं जगदुपजीवति ।

तस्या वेदवाचः समुद्रिक्तगुणा भगवद्रूपविशेषा निःसृताः । मनसि निरूढा भवन्ति । तेन प्रसन्नेन भगवता प्रदेशकाश्चत्वारः, आचार्यान्यौ सरस्वतीभारत्यौ आचार्यौ ब्रह्मवायू च । तैश्च चतुर्भिः प्रदेशकैरक्षरं ब्रह्म क्षरति । तदुपजीवति जगदिति ।

तस्याः परदेवतायाः समुद्राश्चत्वारो वेदाः । विक्षरन्ति निःसरन्तीत्यर्थः । तेन प्रदिष्टाश्चत्वारो वर्णा जीवन्ति । ततः देवेभ्यः अक्षरं ब्रह्म क्षरति । अभि-व्यक्तं भवति । अभीष्टं च क्षरति । तत ओमित्यक्षरं सारभूतं क्षरति । तदक्षरं विश्वं वाङ्मयं उपजीवति । तच्च ओमित्यक्षरं विश्वाख्यं नारायणमुप-जीवति ॥ ४२ ॥

**शकमयंधूममारादपश्यंविषूवतापरऽएनावरेण ।**
**उक्षाणंपृश्निमपचन्तवीरास्तानिधर्म्माणिप्रथमान्यासन् ॥ ४३ ॥**

**शक+मयम् । धूमम् । आरात् । अपश्यम् । विषु+वता । परः । एना । अवरेण ॥ उक्षाणम् । पृश्निम् । अपचन्त । वीराः । तानि । धर्म्माणि । प्रथमानि । आसन् ॥ ४३ ॥**

मन्त्रोऽयं त्रैष्टुभः । तुरीयचरणे–'प्रथमानि+आसन्' इति विश्लेषेणैकादशा-क्षरता । 'शकमयमिति शकधूमः । उक्षाणं पृश्निमिति स्तोमः' इति कात्या-यनः । शकमयो धूम इति का देवता? शकृन्मयः शुष्कगोमयसम्भूतो धूम इत्यग्निमुग्धा धूमतान्ता याज्ञिकाः । प्राणनारायणाविति तत्ववादिनः । पृश्निर्वल्लीरूपः सोम उत्तरार्धदेवतेति याज्ञिकाः । प्राणनारायणावेवोत्तरार्धदेवते अपीति तत्ववादिनः । विशेषतश्चाग्निवाय्वादित्यस्थौ प्राणनारायणौ ।

२२-७-११



शकमयं शक्तिमन्तं दृष्टिक्षपणदक्षं धूममारादपश्यम् । विषुवता सर्वत्र व्यापनशीलेन, अप्रकाशरूपत्वाद् राजसत्वाच्चावरेण एना एतेन धूमेन परस्तात् प्रकाशरूपत्वात् सात्विकत्वात् निर्मलत्वाच्च परोऽग्निरनुमीयते । एवं जगतो दर्शनेन तत्कारणं ब्रह्मानुमीयते । 'जन्माद्यस्य यतः' इति ह्याह । तथा शकमयं बलस्वरूपं धूनोति एजयति जगदिति धूमं मुख्यप्राणमाराद् अन्तिके अन्तरेव स्वहृदयगुहायाम् अपश्यम् । बहिर्वा परितश्चलन्तम् । विषुवता सर्वगतेन वायुनाऽवरेण वाहनेन परस्ताद् वाहकोऽनुमीयते । 'नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि' इति श्रवणात् । 'वरदो वायुवाहनः' इत्यादि स्मरणाच्च । प्रथमं शक्तिमन्तं वायुमपश्यम् । तेन ततः धूत्करोतीति धूमनामानं भगवन्तमाराद् हृदयकमलेऽपश्यमिति वा । 'धूत्काराद् धूम उच्यते' इति हि स्मरन्ति । सर्वगतेन न विद्यते वरोऽस्मादिति सर्वोत्तमेन एना नारायणेन दृष्टेन ततः परो विलक्षणः, असर्वगतः, स्वरूपतोऽवरः, अशक्तः जीवगणः स्फुटमवगतः । न केवलमग्निरनुमीयते, अनुभूयते चेत्याह– तेन प्रथममनुमितेन पश्चाद् गत्वा चक्षुर्विषयीकृतेन प्राश्नाति जन एनमिति पृश्निमदनीयं चतुर्विधमन्नं नानाविधे रूपै रसैश्च उक्षाणमिष्टसेचनमेकं समाराधनमपचन्त वीराः । अथच उक्षाणमभीष्टसेचकं सर्वैः प्रष्टव्यं नारायणं प्रति हविरपचन्त, जुहुवुश्च । एवमुक्षाणं पृश्निं च नारायणं प्राणं वा अपचन्त, मनसः पाकेन, पक्वतादशायां ध्यानेनापश्यन् वीरा ज्ञानिनः । तानि बाह्यान्तर्यज्ञरूपाणि धर्मसाधनानि प्रतनानि प्रथमानि चाऽसन् ॥

अथच शकमयं वर्षणे शक्तं धूमं मेघमपश्यम् । अवरेण भूस्थाने तिष्ठता, प्रकाशतः परितो व्याप्नुवताऽनेनाग्निनाऽयं परस्तादन्तरिक्षस्थानो मेघ उत्पन्नः । अथच गगने व्याप्य तिष्ठता प्रकाशावरकतयाऽवरेणानेन मेघेन परस्ताद् वृष्टिर्भवति । तेन प्रजापुष्टिश्च तुष्टिश्च । अथच सर्वगामिना भूसङ्गततयाऽवरेण अवाग्गामिना वायुना भूमेः परस्तात् मेघो जायते । अथच मेघोऽयं व्याप्तकिरणजालेन अवरेण नक्तं सर्वजगदावरणेन आदित्येन

निदाघस्य परस्ताद् भवति । तेन उक्षाणं पृश्निं सस्यजातमपचन्त वीराः । तेन अग्निवाय्वादित्येभ्यः मेघसम्भवात्, ततः सस्यसम्भवात् जीवन-प्रदानामेषामाराधनरूपाणि धर्माणि प्रथमान्यासन् । धर्मशब्दः साधनवचनो नपुंसकः । साध्यवचनः पुल्लिङ्ग इति व्यवस्था । यदाह जयादित्यः 'अर्धर्चाः पुंसि च'(अ.सू.२.४.३१) इत्यत्र–'घर्म इत्यपूर्वे पुल्लिङ्गः । तत्साधने नपुंसकम् । तानि धर्माणि प्रथमान्यासन्' इति ॥ ४३ ॥

**त्रय॑ःके॒शिन॑ऽऋतु॒थाविच॑क्षतेसंवथ्स॒रेव॑पत॒ऽएक॑ऽएषाम् ।**
**विश्व॒मेकौ॑ऽअ॒भिच॑ष्टे॒शची॑भि॒र्ध्राजि॒रेक॑स्यदद्दृशे॒नरू॒पम् ॥ ४४ ॥**

**त्रय॑ः । के॒शिन॑ः । ऋ॒तु॒ऽथा । वि । च॒क्ष॒ते॒ । सं॒व॒थ्स॒रे । व॒प॒ते॒ ।**
**एक॑ः । ए॒षा॒म् ॥ विश्व॑म् । एक॑ः । अ॒भि । च॒ष्टे॒ । शची॑भिः । ध्राजि॑ः ।**
**एक॑स्य । द॒दृ॒शे॒ । न । रू॒पम् ॥ ४४ ॥**

इयं प्रथमचरण एकाक्षराधिका त्रिष्टुप् । तेनेयं भुरिक्त्रिष्टुप् । अनुक्रमणीकारः केवलां त्रिष्टुभं मन्यते, त्रिष्टुबधिकारोक्तास्त्रिष्टुभ एवेति मन्यमानः । अथ देवतामाह–'त्रयः केशिन इत्यग्निः सूर्यो वायुश्च केशिनः' इति । अग्निसूर्यवायुगतौ प्राणनारायणावित्येव तत्ववादिनः । विशेषतस्त्रिरूपः प्राणश्च ।

पूर्वप्रस्तुता मेघनिष्पादका जीवनप्रदास्त्रयो देवाः प्रस्तूयन्ते । त्रयः केशिनः अग्निवाय्वादित्याः । धूमेनाग्निः केशी । रजसा वायुः । किरणैरादित्यः । 'अंशवः केशसञ्ज्ञिताः' इति भारतवचनात् । ज्वाला वाऽग्नेः केशाः । ज्वालां हि शिखामाचक्षते । ज्वालिनं च शिखिनम् । ते च त्रयः त्रिस्थानेषु नारायणस्य प्राणस्य प्रतीकभूताः । ऋतुथा । ऋच्छति इति ऋतुः कालः । कालक्रमेण, कालेकाले जगत्स्थितिं विचक्षते परिशीलयन्ति । कालोचितः वृष्ट्यादिर्यथा सुगमः स्यात् तथा व्यवस्थापयन्ति । एषामेकोऽग्निः संवत्सरे परिवर्तमाने, पृथिव्यां तापं जनयित्वा बीजावापहेतुर्भवति । अन्यथा सर्वमुप्तं शैत्येन श्वयति नश्यति च । एक आदित्यः शचीभिः मेघोत्पादनवर्षणप्रकाशनादिकर्मभिः

२२-७-११



विश्वं वर्धमानमभि पश्यति । सस्यवृद्धिहेतुर्भवतीत्यर्थः । एकस्य वायोः ध्राजिर्गतिः सस्यकणिशान्दोलनेनानुभूयते, न रूपं पुनर्दृश्यते ।

अथ केशिनस्त्रयोऽवताराः । केशी वायुरिति श्रुतिरेव जुघोष– 'वायुरस्मा उपामन्थत् पिनष्टि स्म कुनन्नमा । केशी विषस्य पात्रेण' इति । तथाच वायोस्त्रयोऽवताराः हनुमान् भीमो मध्व इति । ऋतुथा युगप्रकारेण क्रमशस्त्रेतायां द्वापरे कलौ च । विपश्चितस्तद्रूपत्रयं विचक्षते आचक्षते । विचक्षते जगद्व्यापारं त्रयः परिशीलयन्ति वा । जगति विततानि भगवद्रूपाणि पश्यन्ति रामं कृष्णं वेदव्यासं च । एषामेको हनुमान् सीतापहारानन्तरं संवत्सरे अतीतप्राये, अशोकवनं वपते छिनत्ति । मुण्डितमिव शिरः अशोकवनं निर्वृक्षममङ्गलदर्शनं चकार । अथच युद्धे राक्षसान् वपते । सीतामाश्वास्य रामसमागमाङ्कुरं वपते । एको भीमः शचीभिः शक्तिभिः विश्वं धार्तराष्ट्राणां बलमभिगन्तुं चष्टे । दुःशासनादिहननकाले विश्वं नारायणमभित उभयपार्श्वयोः ददर्श नरसिंहात्मानमिति । एकस्य मध्वस्य ध्राजिर्गतिरवगतिः अवगतिदर्शनी भाष्यकृतिः न रूपं रूपमिव दृश्यते । 'धन्यमन्यदिव रूपमात्मनः' इति पण्डिताचार्यवचनम् । अथच शचीभिः ग्रन्थकरणरूपैः कर्मभिः तस्य ध्राजिरवगतिरपि रूपमिवानुपममिति ज्ञायते । नञः पूर्वप्रयुक्तस्यापीवार्थता क्वचिदिष्यते ॥ ४४ ॥

**च॒त्वारि॒वाक्परि॑मिताप॒दानि॒तानि॑विदुर्ब्रा॑ह्म॒णायेम॑नी॒षिण॑ः ।**
**गुहा॒त्रीणि॒निहि॑ता॒नेङ्ग॑यन्तितु॒रीयं॑वा॒चोम॑नु॒ष्या॑वदन्ति ॥ ४५ ॥**

**च॒त्वारि॑ । वाक् । परि॑+मिता । प॒दानि॑ । तानि॑ । वि॒दुः । ब्रा॒ह्म॒णाः ।**
**ये । म॒नी॒षिण॑ः ॥ गुहा॑ । त्रीणि॑ । निऽहि॑ता । न । इ॒ङ्ग॒य॒न्ति॒ । तु॒रीय॑म् ।**
**वा॒चः । म॒नु॒ष्या॑ः । व॒द॒न्ति॒ ॥ ४५ ॥**

अत्रापि द्वितीयपादे द्वादशाक्षराणीति भुरिक् त्रिष्टुप् । केवला त्रिष्टुबिति कात्यायनः । वाचं च स देवतामाह– 'चत्वारि वाग् वाचः' इति ।

प्राणनारायणौ भारतीसरस्वत्यौ रमा चेति तत्ववादिनः । वक्तीति वागिति भगवानुच्यते चतूरूपः । कानि तानि चत्वारि वाचः पदानि रूपाणि? विश्वस्तैजसः प्राज्ञस्तुरीय इति चत्वारि पदानि । जाग्रदादिप्रणयनार्थं देहे परिमितानि । अथापि ज्ञानिभिः परितोऽवगतानि । तानि सर्वाण्यपि रूपाणि ब्रह्मविदो विदुर्ये मनसामीशते । तेषु त्रीणि चक्षुःकण्ठहृदयस्थानानि शरीरस्थानानि । अथापि नेङ्गयन्ति न प्रकाशन्ते न दृश्या भवन्ति । इङ्गनमिह दर्शनं विवक्षितम् । तुरीयं यदत्यतिष्ठद् दशाङ्गुलम्, तन्मनुष्या मननेन जानीयुर्वदेयुश्च ।

अथच वासुदेवादीनि चत्वारि रूपाणि । अनिरुद्धादीनि त्रीणि सृष्टयाद्यर्थं परिमितानि । हृदयगुहायां निहितानि । वाचो नारायणस्य वासुदेवाख्यं तुरीयं रूपं मोक्षप्रदमिति मनीषिणो वदन्ति ।

अथ वायोश्चत्वारि रूपाणि अशनाया पिपासा मृत्युरमृतमिति । त्रीणि अशनायापिपासामृत्युनामकानि नाभिगुहायां निहितानि । तुरीयमपनयति संसारादिति मोक्षदं मनीषिणो वदन्ति । वक्ति उपदिशति भगवन्तं देवानामिति वायुरपि वाक् ।

अथच वाङ्नामा रमासरस्वती भारती च । तस्याश्चत्वारि पदानि परा पश्यन्ती मध्यमा वैखरीति । आद्यानि त्रीणि गुहायां नाभौ हृदये कण्ठे निहितानि । वाचस्तुरीयं पदं वैखरीं मनुष्या वदन्ति ।

अथच वेदत्रयी लौकिकी वागिति चत्वारि पदानि । तुरीयां वाचं लौकिकीं मनुष्या वदन्ति ॥ ४५ ॥

**इन्द्रं॑मि॒त्रंवरु॑णम॒ग्निमा॑हु॒रथो॑दि॒व्यस्ससु॑प॒र्णोग॒रुत्मा॑न् ।**
**एकं॒सद्विप्रा॑बहु॒धाव॑दन्त्य॒ग्निंय॒मम्मा॑त॒रिश्वा॑नमाहुः ॥ ४६ ॥**

२२-७-११



**इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । आ॒हुः । अथो॒इति॑ । दि॒व्यः ।**
**सः । सु॒+प॒र्ण्णः । ग॒रुत्मा॑न् ॥ एक॑म् । सत् । विप्राः॑ । ब॒हु॒धा ।**
**व॒द॒न्ति॒ । अ॒ग्निम् । य॒मम् । मा॒त॒रिश्वा॑नम् । आ॒हुः ॥ ४६ ॥ ९ ॥**

अत्र तृतीयतुरीयचरणयोः 'वदन्ति+अग्निम्' इति विश्लिष्य पठनेन केवला त्रिष्टुप् । इमामृचमुत्तरां च सौरीमाह कात्यायनः–'इन्द्रं मित्रं सौर्यौ' इति । सूर्यनारायण इति सूक्तम् । वस्तुतस्तु पूर्वोक्तो नारायणश्चतूरूपः स्तूयते । एकमेव नारायणं इन्द्रं मित्रं वरुणमग्निमिति चतुर्भिः पदैश्चतूरूपमाहुः । इन्द्रः प्रद्युम्नः सृष्टिकृत् । 'प्रद्युम्नश्चेन्द्रनामकः' इति स्मरणात् । निर्मितं त्रायत इति मित्रोऽनिरुद्धः स्थितिहेतुः । आवृणोति वासयतीति वरुणो वासुदेवः । अत्तीत्यग्निः संहर्ता सङ्कर्षणः । एवं चतुरात्मा नारायणः सुपर्णः सुपरा-नन्दः । मुक्तानां स्वानन्दप्रदश्च । स दिव्यः ज्ञानानन्दमयत्वात् । दिवि स्थितत्वाच्च । गरुत् गरणं गीः । तद्वान् गरुत्मान् । वेदोपदेष्टा । 'वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः', 'तेने ब्रह्म हृदा य आदिकवये' इत्यादि-वचनात् । प्रतिपाद्यतया च गरुत्मन् । समस्तवेदवेद्यः सर्वनामा च । एवं तमेवेन्द्रादिदेवेषु स्थितमिन्द्रादिपदवाच्यं समस्तदेवनामानमाहुः । 'यो देवानां नामधा एक एव' इति श्रवणात् । इदि परमैश्वर्ये । इन्दतीन्द्रः पर-मेश्वरः । मितिं रातीति मित्रः । लोकदेवतात्वादिन्द्रः प्रथमोक्तः । ततोऽहोरात्रदेवते मित्रावरुणौ । सङ्कल्पस्य ध्यानस्य च देवते । मनसा सङ्कल्पयति । ततो मनोदेव इन्द्रः प्रथममुक्तः । अन्ते चित्तवाग्देवताऽग्निः । अग्नौ मन्त्रानुच्चार्य जुहोति । वेदमानी च सुपर्णः । स चतुरात्मा नारायणश्च सुपर्णः पूर्णा-नन्दः । अथो इत्यादीन्यपुरुषवचनानि निपातान्यापि तस्यैव नामानि । अकारवाच्यः, सर्वविलक्षणः सन् सर्वत्र स्थितः, सर्वस्मादुच्चश्च । तस्मात् तत्तन्नामा । एवमेकमेव सर्वकर्तारम्, सन्तं निर्दोषगुणपूर्णं च । विप्रा ज्ञानिनो बहुरूपं बहुभिर्नामभिर्वदन्ति । विशिष्य च त्रिषु स्थानेषु त्रिप्रतीकम्, भूस्थानेऽग्निप्रतीकम्, एतमेवाग्निनामानमाहुः–'अग्निमीळे पुरोहितम्' इति ।

स्वःस्थाने यमयतीति यममादित्यमाहुः । 'तत् सवितुर्वरेण्यम्' इति, 'सूर्य आत्मा जगतस्तस्थुषश्च' इति च । अन्तरिक्षस्थाने वायुप्रतीकमत एव मातरिश्वानमाहुः–'पिता त्वं मातरिश्व नः' इति, 'वायवायाहि दर्शत' इति च ॥

अहश्च रात्रिं च यमयतीति यमः सूर्यश्चन्द्रश्च । 'यदादित्यगतं तेजः' इत्यादेः । तमेतं मुख्यवायुगतं मातरिश्वानमाहुः । 'वायौ मुख्यधिया' इति भागवते । मातरि आकाशे श्वयतीति मातरिश्वा । आकाशं हि विष्णुपद-माहुः ॥ ४६ ॥ ९ ॥

**॥ इति नवमो वर्ग्गः ॥**

**कृ॒ष्णन्नि॒या॒नं॑ह॒र॑य॒स्सु॒प॒र्ण्णाऽअ॒पोव॒सा॑ना॒दि॒व॒मुत्प॑तन्ति ।**
**तऽआव॑वृ॒त्र॒न्त्सद॑नादृ॒तस्या॒दिद्धृ॒तेन॑पृथि॒वीव्यु॑द्यते ॥ ४७ ॥**

**कृ॒ष्णम् । नि॒ऽया॒न॑म् । हर॑यः । सु॒+प॒र्ण्णाः । अ॒पः । वसा॑नाः । दिव॑म् । उत् । प॒त॒न्ति॒ । ते । आ । अ॒व॒वृ॒त्र॒न् । सद॑नात् । ऋ॒तस्य॑ । आत् । इत् । घृ॒तेन॑ । पृ॒थि॒वी । वि । उ॒द्य॒ते॒ ॥ ४७ ॥**

अत्र तुरीयचरणे 'ऋतस्य+आदित्' इति व्यूहेन एकादशाक्षरता । तेन केवला त्रिष्टुप् । सौरीयमृक् सूर्यगतं नारायणं स्तौति । प्राणं च त्रिरूपम् ।

यत्र पुनःपुनः नीचैर्यानं नोर्ध्वगमनम्, यच्च मेघावृतत्वात्, देवानां कृष्णपक्षतुल्यत्वाच्च कृष्णमित्युच्यते तद् दक्षिणायनम् । जलहरणाद्धरयः सूर्यरश्मयः । जलेन सुपूर्णाः । मेघजलानि स्वतेजसा आच्छादयन्तः, अद्भिर्वा मेघसम्भृतैराच्छादिताः सन्तः मेघेषु जलं पूरयन्तः दिवमाकाशमुत्पतन्ति । कदा? कृष्णं नियानं प्रति । दक्षिणायनं प्रति । दक्षिणायन इत्येतत् । ते पुनः ऋतस्य विष्णोः सदनादन्तरिक्षादाववृत्रन् भूमिं प्रत्यावर्तन्ते मेघेषु पूरितानि जलानि भूमेः प्रत्यर्पयितुम् । आदित् तस्मादेव पृथिवी घृतेन स्नेहरसेन व्युद्यते

२२-७-११



क्लिद्यते । वृष्ट्या क्लिन्ना स्नेहरसेन स्निग्धा सस्यसम्पन्ना बहुदुग्धा च भवतीत्यर्थः ॥

अथच कृष्णं भगवन्तम्, नियानं रामरूपेणावतीर्णं प्रति, तत्सेवार्थमिति यावत्, हरयः गौरवाद् बहुवचनम् । हरिरिति वायुरुच्यते । हरिरिति कपि-रुच्यते । कपिरूपेणावतीर्णो वायुः हनुमानिति यावत् । सुपर्णः सुपतनः । वैनतेय इव वेगेन वियति गच्छन् । सुपरं भगवन्तं मनसि नयति वहतीति च सुपर्णः । अपः समुद्रवारि वसान आच्छादयन् अन्तरिक्षमुत्पपात । ततः ऋतस्य रामस्य सदनात् दण्डकारण्यात् आ अववृत्रन् प्रत्यावर्तत प्रत्या-वर्तत । 'सुपां सुपो भवन्ति । तिङां तिङो भवन्ति' इति कात्यायनवचनात् सर्वं सुन्दरम् । रामेण कपिभिश्च सह । तस्मादेव पृथिवी प्रथितमहिमा सीता स्नेहेन क्लिन्ना बभूव रामदर्शनजनितेन ॥

अथच कृष्णं नियानं अवतारलीलां समाप्य भूमेर्निर्गच्छन्तमनुसृत्य । हरिरिति यम उच्यते । इन्द्र उच्यते । वायुरुच्यते । हरन्ति आहरन्ति धर्ममिति यमाद्यवतारभूता हरयः पाण्डवाः । सुपर्णाः दुर्गमे हिमवति सुखेन गच्छन्तः अपः स्वस्वपुण्यकर्माण्येव वसाना वासांसीव परिदधानाः स्वर्गं लोकमुद-पतन् । विशेषतो भीमः स्तूयते । अद्भिर्देवेन्द्रयमाश्विभिर्देवैः परिगतः देहं हिमवन्मार्गे विहाय स्वर्गं जगाम । ऋतस्य सदनात् सत्यलोकादत्र प्रत्यावर्तत किल । अत एव अत्र स्वर्गे लोके पृथिवी प्रकृतिमानिनी द्रौपदी घृतेन दिव्यया दीप्त्या क्लिद्यते स्म ॥

अथच कृष्णद्वैपायनं नियानं भूमाववतीर्णं अनुसृत्य तत्सेवार्थं हरिर्वायुर्मध्वो बभूव । स च तं दिदृक्षुः सुपर्ण इव गिरिदुर्गे पतन् मेघमार्गमाच्छादयन् जगाम । दृष्ट्वा च बादरायणं ऋतस्य बादरायणस्याऽश्रमात् प्रत्यावर्तत । तस्मादेवेयं पृथिवी विष्णुभक्त्या क्लिद्यते । अवतारत्रयपरतासूचनार्थमेव च हरय इति बहुवचनम् ॥ ४७ ॥

**द्वादशप्रधयश्चक्रमेकन्त्रीणिनभ्यानिकऽउतच्चिकेत ।**
**तस्मिन्त्साकन्त्रिशतानशङ्कवोर्प्पिताष्षष्टिर्न्नचलाचलासः॥ ४८ ॥**

**द्वादश । प्र+धयः । चक्रम् । एकम् । त्रीणि । नभ्यानि । कः । ऊँ इति । तत् । चिकेत ॥ तस्मिन् । साकम् । त्रिशताः । न । शङ्कवः । अर्प्पिताः । षष्टिः । न । चलाचलासः ॥ ४८ ॥**

अत्र प्रथमपादे ‘दुवादश’ इति विश्लेषेणैकादशाक्षरता । ‘शङ्कवो+अर्पिताः’ इति पादविश्लेषेण तुरीयचरणेऽप्येकादशाक्षरतेति केवला त्रिष्टुप् । देवतामाह कात्यायनः–‘द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनम्’ इति । कालचक्रनियन्ता नारायण इति तत्ववादिनः ।

चक्रमेकं संवत्सराख्यम् । नारायणश्च । कथं नारायणश्चक्रम्? चकतीति चक्रम् । साधून् तर्पयति, आसाधून् प्रतिहन्ति च । चक तृप्तौ प्रतिघाते च । तस्य द्वादश प्रधयः परिधयः मासाः । मासनियामकाः केशवादयश्च । नभ्यानि नाभिबन्धनफलकदारूणि । त्रीणि उष्णकालः वर्षकालः शीतकालश्चेति । विश्वस्तैजसः प्राज्ञश्च जाग्रत्स्वप्नसुषुप्तिहेतवः । को नाम तच्चक्रं तत्वतो वेद ? न कोऽपि । यदि कश्चित् जानीयात् स क उ ब्रह्मैव । वायुर्वा । तस्मिन् साकं शङ्कवः न कीलका इव अरा इव त्रिशताः षष्टिर्न षष्टिश्च, नकारश्चार्थः, अहोरात्राणि । तद्गतानि भगवद्रूपाणि । कालेन साकं निरन्तरं चलनवन्ति ।

अथच चक्रमिदं शरीरम् । चङ्क्रमणात् । न्यग्रोधपरिमण्डलत्वाच्च । द्वादश परिधय इन्द्रियाणि । दश ज्ञानकर्मेन्द्रियाणि मनो बुद्धिश्चेति द्वादश । द्वादशात्मा नारायणश्च । त्रीणि नभ्यानि नभ्यन्ते हिंस्यन्ते इति नभ्यानि अवयवभागाः । आ कटेः, आ कण्ठात्, शिरश्चेति । अथच नभन्ते हिंसन्ति अज्ञानावृततयेति त्रीणि नभ्यानि त्रयोऽवस्थाः जाग्रत्स्वप्नसुषुप्तयः । तदिदं चक्रं को वेद । तत्रतत्रगतं भगवद्रूपम् । तस्मिन् त्रिशताः षष्टिश्च शङ्कव

२२-७-११



इवास्थीनि । तानि न चलाचलासः, चलन्ति न चलन्ति च । अतिस्थिराणि अस्थीनीति व्युत्पत्त्या अचलानि । अस्थिराणीति व्युत्पत्त्या चलानि । तत्र चाचलानि षष्ट्युत्तराणि त्रिशतानि भगवद्रूपाणि ॥ ४८ ॥

**यस्तेस्तनश्शशयोयोमयोभूर्य्येनविश्वापुष्यसिवार्य्याणि ।**
**योरत्नधावसुविद्यस्सुदत्रस्सरस्वतितमिहधातवेकः ॥ ४९ ॥**

**यः । ते । स्तनः । शशयः । यः । मयः+भूः । येन । विश्वा । पुष्यसि । वार्य्याणि ॥ यः । रत्न+धाः । वसु+वित् । यः । सु+दत्रः । सरस्वति । तम् । इह । धातवे । करितिकः ॥ ४९ ॥**

अत्र द्वितीयचरणे ‘वारियाणि’ इति विश्लेषेण छन्दःपूर्तिः । ‘यस्ते सरस्वत्यै’ इत्याह कात्यायनः । वाग्देवते भारती सरस्वती च देवते । मुख्यतो नारायणश्च ।

वेदमन्त्राः वेदगानं च सरस्वतीस्तनोपममितीदानीमाह । ‘सङ्गीतमथ साहित्यं सरस्वत्याः स्तनद्वयम्’ इति हि भणन्ति ।

हे सरस्वति वाग्देवते । कथं सरस्वती । भगवद्गुणानुसरणं सरः । तद्वती सरस्वती । ते स्तनः, वैदिकी वाक्, यद्रसं पाययसि नः शिशूनां मातेव । यः शशयः । अतिशयितं सुखं शशम् । यमिति ज्ञानम् । ज्ञानान्दमयः । यश्च स्तनन्धयानां मयोभूः परमानन्दमनुभावयति । येन विश्वानि वरणीयानि अभीष्टानि पुष्यसि नः शिशूनाम् । यः स्तनः रत्नधाः आनन्दनिधिः । आनन्दरूपं परमात्मानं वा धत्ते । वसु सम्पज्ज्ञातं वेदयति । वसून् देवांश्च परिवारतया वेदयति । देवोत्तमे शे शंरूपे वायौ सदा शेते वसतीति च शशयः । यश्च सुदत्रः मोक्षसुखदाता । तमिह अस्मिन्नेव जन्मनि धातवे । धेट् पाने । पातुं पानाय कः कुरु ॥

नारायणश्च सरस्वती । ते स्तन इति त्वन्मातुः स्तन इत्यर्थः । ‘तं माता रेळ्हि स उ रेळ्हि मातरम्’ इति श्रुतेः । स्तनयतीति स्तनः समस्तं वेदवाङ्मयं वा ॥ ४९ ॥

**यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ।**
**तेहनाकम्महिमानस्सचन्तयत्रपूर्वेसाद्ध्यास्सन्तिदेवाः ॥ ५० ॥**

**यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्म्माणि । प्रथमानि । आसन् ॥ ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साद्ध्याः । सन्ति । देवाः ॥ ५० ॥**

अत्रापि द्वितीयचरणे 'प्रथमानि+आसन्' इति, तुरीयचरणे 'साधियाः' इति विश्लेषेण छन्दःपूर्तिः । 'यज्ञेन साध्येभ्यः' इति कात्यायनः । साध्याराध्यो यज्ञनामा विष्णुरिति सूक्तम् ।

यज्ञेन बाह्येनाऽन्तरेण च यज्ञं नारायणं पूजयन्ति स्म देवाः । 'यज्ञो वै विष्णुः' इति श्रुतिः । तत् प्रथमं धर्मसाधनमासीत् । ते ह ये यज्ञमयजन्त महिमानः महाज्ञानिनः साक्षात्कृतब्रह्माणः सन्तः नाकं मोक्षमसचन्त । सङ्गच्छन्ते वा । यत्र नाके नारायणलोके पूर्वे साध्याः साधितभगवदनुग्रहा देवाः सन्ति ॥ ५० ॥

**समानमेतदुदकमुच्चैत्यवचाहभिः ।**
**भूमिम्पर्ज्जन्याजिन्वन्तिदिवञ्जिन्वन्त्यग्नयः ॥ ५१ ॥**

**समानम् । एतत् । उदकम् । उत् । च । एति । अव । च । अहं+भिः ॥ भूमिम् । पर्ज्जन्याः । जिन्वन्ति । दिवम् । जिन्वन्ति । अग्नयः ॥ ५१ ॥**

अनुष्टुप् छन्दः । 'उच्चैति+अव च' इति विश्लेषेण, 'दिवं जिन्वन्ति+अग्नयः' इति विश्लेषेण च छन्दःपूर्तिः । 'पराऽनुष्टुप् सौरी पर्जन्याग्निदेवता वा' इति कात्यायनः । सूर्यपर्जन्याग्नयश्च देवताः । तेषु स्थित्वा तत्तत्कार्यनिर्वर्तकौ प्राणनारायणौ च ।

एतदुदकं देवानां मनुष्याणां च समानं प्रीणनम् । उदकस्थो भगवान् समानं प्रीणयति । ग्रैष्मैरहोभिरुच्च एति । वार्षिकैरहोभिरव चैति । भगवान् उदाययति,

२२-७-११



अव चाययति सूर्यगतः, उदकस्थः स्वयं यात्यायाति च । कथमुदकं भगवान् । उदा जीवाः । तेषां कं सुखं जलं वा येन । यदुदकमुच्चैर्गच्छति तेन पर्जन्या भूमिं जिन्वन्ति जलवर्षणेन भूमिगान् प्रीणयन्ति । यदव चान्तरिक्षादवाग् जलं गच्छति भूमिं तेन चौषधिवनस्पतयो भवन्ति । तैर्हविः सम्पद्यते । ते चाग्निषु हूयन्ते । अग्नयश्च द्युस्थान् देवान् प्रीणयन्ति । अग्नेस्त्रिविधत्वात् पञ्चरूपत्वाच्च बहुवचनम् । तथाहि गीतायाम्–'देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमावाप्स्यथ' इति । जलस्थो भगवान् मनुष्यान् प्रीणयति । अग्निस्थो देवानिति । एवं प्राणोऽपि ॥५१॥

**दिव्यंसुपर्ण्णंवायसम्बृहन्तमपाङ्गर्भन्दर्शतमोषधीनाम् ।**
**अभीपतोवृष्टिभिस्तर्प्पयन्तंसरस्वन्तमवसेजोहवीमि ॥ ५२ ॥**

**दिव्यम् । सु+पर्ण्णम् । वायसम् । बृहन्तम् । अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् ॥ अभीपतः । वृष्टि+भिः । तर्प्पयन्तम् । सरस्वन्तम् । अवसे । जोहवीमि ॥ ५२ ॥ १० ॥**

**॥ इति दशमो वर्ग्गः ॥**

**इत्यस्यवामीयं वैश्वदेवं दैर्घतमसं सूक्तं समाप्तम् ॥**

सूक्तस्य चरमे मन्त्रेऽस्मिन् स्फुटं त्रिष्टुप् छन्दः । एका (४२) प्रस्तारपङ्क्तिः, एका (५१) अनुष्टुप्, षड् (१२,१५,२३,२९,३६,४१) जगत्यः, अवशिष्टास्त्रिष्टुभश्चतुश्चत्वारिंशदिति । अन्त्याया ऋचो देवतामाह कात्यायनः– 'अन्त्या सरस्वते सूर्याय वा' इति । 'सरस्वन्तं देवं स्तौति सूर्यं वा' इति षड्गुरुशिष्यः । किमुक्तं भवति? कोऽयमश्रुतपूर्वः सरस्वान्नाम देवः? शृणु तथ्यम्–

सरस्वानिति नारायण उच्यते । सरांसि गुणास्तद्वानिति । तमेव सरन्तीति सरांसि छन्दांसि । तद्वानिति । स एव स्त्रीरूपः सरस्वतीत्युच्यते ।

गुणानुसरणाद् ब्रह्मवायू सरस्वन्तौ । ब्रह्माणीभारत्यौ सरस्वत्यौ । अन्ते गुरुदेवतयोरुपसदनेन सूक्तमुपसंहरति । सरस्वन्तं परमगुरुं ब्रह्माणं वायुं च । सरस्वन्तं परदेवतां नारायणं च अवसे ज्ञानरक्षणाय पुनःपुनराह्व- यामि । 'यथा देवे तथा गुरौ' इति श्रवणात् । विशेषणानां मुख्यतो नारायणे ब्रह्मवाय्वोर्यथायोग्यमन्वयः । दिवि ज्ञानानन्दमये अप्राकृते लोके भवम् । दिवि सत्यलोके भवं च । सु दुःखासम्भिन्नः परः निरवधिकः णः आनन्दो यस्य तम् । णश्च निर्वृतिवाचकः । अनन्तबलं वा । 'णकारो बलम्' इति श्रुतेः । सुपरं नयतीति सुपर्णो ब्रह्मा च वायुश्च । 'स एनान् ब्रह्म गमयति' इति श्रुतेः । वायसं सर्वज्ञं सर्वगतं च । वय गतौ । जगद्बन्धकं वा । वय बन्धने । वयत इति वायुः । स एव वायसः । महति सुपर्णे गरुडे क्षुद्रे वायसे च गतम् । 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इतिवत् । बृहन्तं सर्वगुणपूर्णम् । सर्वजीवोत्तमं च । अपां देवानां गर्भवदुत्पादकम् । ओषधीनां च गर्भम् । दर्शतं ततदर्शनं सर्वज्ञम् । भवरोगस्योषधिरूपाणां ज्ञानपद्धतीनां दर्शयितारं वा । अभित उभयत अपो यत्र तदभीपम् । तत्र भूभागे स्थितान् वृष्टिभिस्तर्पयन्तम् । प्रायः सर्वोऽपि देश उभयतो जलावृतो भवति । शरीरं चाभीपमुच्यते । उपरिष्टादधस्ताच्च तत्वाभिमानिदेवैरावृतत्वात् । तत्र मध्ये स्थितं जीवजातं ज्ञानवृष्टिभिस्तर्पयन्तम् । तादृशं देवं नारायणं गुरू च ब्रह्मवायू लक्ष्म्या सरस्वतीभारतीभ्यां च सह जोहवीमीति । अत्र सूक्तसमाप्तिः, दशमवर्गसमाप्तिः, द्वाविंशानुवाकसमाप्तिश्च ॥ ५२ ॥ १० ॥

**सूक्तं तु दैर्घतमसं विपुलार्थमस्य-**
**वामीयमद्भुतमनेकनिगूढभावम् ।**
**व्याख्यामिषेण विववार यथामनीषं**
**विद्वन्मुदे किल मुकुन्दपदैकभक्तः ॥**



**अस्यवामस्येति महा-**
**सूक्तस्य वैश्वदेवस्य महार्थस्य ।**
**नारायणस्याऽन्तरयज्ञपरतया नितरां**
**भाष्यमकारीदं श्रीमध्वमुनिकृपयाऽऽचार्यगोविन्देन ॥**

**इत्याचार्यगोविन्दस्य कृतिषु अस्यवामीयमन्त्रभाष्यं सम्पूर्णम् ॥**

—०—

२२-७-११

# तारतम्यमीमांसा

**नत्वा नारायणं देवं मध्वं मूलगुरुं तथा ।**
**प्रणीयते तारतम्यमीमांसा हरितुष्टये ॥**

विष्णोः सर्वोत्तमत्वं वायोश्च जीवोत्तमत्वं न सम्यगवगम्यते विना तारतम्यमीमांसाम् । विष्णुभक्तिश्च सर्वाधिका न देवतासु परिवारभूतासु तारतम्यपरिज्ञप्तिं विना शक्यमनुसन्धातुम् । तत इयं तारतम्यमीमांसा प्रस्तूयते–

१. परमपुरुषो नारायणः । गुणतो देशतः कालतः शक्तितश्चानन्तः ।

**[मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ।**
**कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः ॥**

**पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा ।**
**यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ॥**

**नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च ।**
**एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः ॥]**

२. परा प्रकृतिर्लक्ष्मीः । नारायणादनन्तांशावरा ।

**[श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ।**
**सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता ॥]**

३. हिरण्यगर्भः । मुख्यप्राणश्च । लक्ष्म्याः कोटिगुणावरौ ।

**[प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः ।**
**स्थितिर्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ॥**

२२-७-११



**मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ।**
**ऋजुः सुमानो विज्ञाता महाध्याता महागुरुः ॥**

**हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ।**
**हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते ॥]**

४. हिरण्यगर्भपत्नी सरस्वती । मुख्यप्राणपत्नी भारती च । ब्रह्मवायुभ्यां शतगुणावरे ।

**[सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च ।**
**सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ॥**

**गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।**
**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।**
**चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः ॥]**

५. गरुडः । शेषः । रुद्रश्च [एकादशरुद्रेषु यः प्रधानः] । सरस्वतीभारतीभ्यां शतगुणावराः ।

**[शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ।**
**नरोऽवटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ॥**

**सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ।**
**दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकः ॥]**

६. विष्णोः कृष्णावतारे षण्महिष्यो नीला, भद्रा, मित्रविन्दा, काळिन्दी, लक्षणा, जाम्बवती च । [आसु जाम्बवती प्रधाना । लक्ष्म्या विशेषावेशदशायां शेषतुल्या ।] गरुडशेषरुद्रेभ्यः पञ्चगुणावराः ।

७. गरुडपत्नी सुपर्णी । शेषपत्नी वारुणी । रुद्रपत्नी पार्वती च । गरुडशेषरुद्रेभ्यो दशगुणावराः ।

८. पुरन्दरः । कामश्च । सुपर्णीवारुणीपार्वतीभ्यो दशगुणावराः ।

**[वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ।**
**सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।**
**सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥]**

९. शरीरमानी अहम्प्राणः [४९मरुत्सु प्रधानः]। पुरन्दरकामाभ्यां दशगुणावरः ।

१०. पुरन्दरपत्नी शची । कामपत्नी रतिः । कामपुत्रोऽनिरुद्धः । बृहस्पतिः । स्वायम्भुवमनुः । दक्षप्रजापतिश्च । अहम्प्राणाद् दशगुणावराः ।

११. स्पर्शमानी प्रवहः [४९ मरुत्सु द्वितीयः] । अनिरुद्धादिभिः पञ्चगुणावरः ।

१२. चन्द्रः । सूर्यः । सूर्यपुत्रो यमः । स्वायम्भुवमनुपत्नी शतरूपा च । [द्वादशस्वादित्येषु सूर्यस्तृतीयः । तत्र प्रथमो विष्णुर्वामनोऽदित्यां जातः । इन्द्रानुजतया जात इति तमुपेन्द्रमाचक्षते । द्वितीयोऽष्टमकक्ष्यागतः पुरन्दराख्य इन्द्रोऽदित्यां पूर्वजातः।] एते प्रवहाद् द्विगुणावराः । अनिरुद्धादिभ्यो दशगुणावराः ।

१३. वरुणः [द्वादशस्वादित्येषु चतुर्थः] ।

१४. नारदः ।

१५. अग्निः [अष्टवसुषु प्रधानः] । वरुणपुत्रो भृगुमुनिः। दक्षप्रजापतिपत्नी स्वायम्भुवमनुपुत्री प्रसूतिश्च । एते चन्द्रादिभ्यो दशगुणावराः ।

१६. वैवस्वतमनुः । विश्वामित्रः । महर्षयः सप्त पूर्वे– मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति ।

२२-७-११



१७. मित्रः [द्वादशस्वादित्येषु पञ्चमः] । निरृतिः । बृहस्पतिपत्नी तारा । प्रवहवायुपत्नी प्रावही च ।

१८. विघ्नाधिपतिर्गणपतिर्भूताकाशमानी । धनपतिः कुबेरः । वायुजो विष्वक्सेनः । सूर्यजावश्विनौ नासत्यदस्रौ नाम । प्रधानवसुमग्निमृते सप्तान्ये वसवः–द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषः, वस्तुः, विभावसुश्चेति । [वसूनामपि नामान्तराणि पठ्यन्ते । वस्तुरेव द्युवसुः, यो भीष्मो बभूव ।] उक्तान् पञ्च वक्ष्यमाणं चैकं विहाय षडादित्याः– अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता चेति । [आदित्यानामपि बहुधा नामानि पठ्यन्तेऽन्यान्यग्रन्थेषु । बहुनामानो हि देवाः ।] दश विश्वेदेवाः– क्रतुः, दक्षः, सवः, सत्यः, कामः, कालः, धुरिः, लोचनः, पुरूरवः, आर्द्रवश्चेति । एकादशसु रुद्रेषु प्रधानं विहायान्ये दश– रैवतः, ओजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्निः, विरूपाक्षश्चेति । [रुद्राणामपि नामान्तराण्यन्यत्र पठ्यन्ते]। एकोनपञ्चाशन्मरुत्सु अहम्प्राणं प्रवहं च विहायावशिष्टाः ४७ मरुतः– प्राणापानव्यानोदानसमानाः, नागकूर्मकृकळदेवदत्तधनञ्जयाः, आवहोद्वहपरावहविवहसंवहाः, शम्भुः, शङ्कुः, कलः, श्वासः, अनलः, अनिलः, प्रतिभः, कुमुदः, कान्तः, शुचिः, श्वेतः, अजितः, गुरुः, सञ्ज्ञः, प्रवर्तकः, कालः, दक्षः, सोम्यः, कपिः, जडः, मण्डूकः, सन्ततः, सिद्धः, रक्तः, कृष्णः, पिकः, शुकः, यतिः, भीमः, हनुः, पिङ्गः, कम्पनश्चेति । [मरुतां बहुविधानि नामानि पठ्यन्ते । नैकत्राप्येकरूपता । तत्रायमेकः प्रकारः प्रतनैरुद्धृतः] । पितृपतिष्वेकः कव्यवाहनामाऽग्निः । [त्रिषु प्रधानपितृपतिषु द्वौ यमसोमौ द्वादशकक्ष्यायां गतौ] । ऋभवस्त्रयः– ऋभुः, विभ्वा, वाजश्चेति । द्यावापृथिवीमानिन्यौ च दैव्यौ ।

१९. प्रधानवायुपुत्रो भूतवायुमानी मरीचिः[१] । प्रधानाग्निपुत्रो भूताग्निमानी पावकः । पादमानिनाविन्द्रपुत्रौ यज्ञनामा जयन्तः, शम्भुश्च । दैत्यगुरुः शुक्रः । तत्सोदरश्च्यवनः । बृहस्पतिसोदर उचथ्यः । उक्तं सनत्कुमारं विहायान्ये त्रयो ब्रह्मणो मानसपुत्रा ऋषयः– सनकः, सनन्दनः, सनातनश्च । सप्त चान्य ऊर्ध्वरेतसः । एतान् दश, पूर्वोक्तान् सनत्कुमारादींश्च दश विहायान्ये काश्यपाद्या अशीतिर्गृहस्था ऋषयः । भाविमन्वन्तराणामिन्द्राः सप्त– बलिः, अद्भुतः, शम्भुः, विधृतिः, ऋतधामा, दिवस्पतिः, शुचिश्च । [अतीतेषु मन्वन्तरेषु प्रथमे स्वायम्भुवेऽन्तरे यज्ञनामा विष्णुरेवेन्द्रः । द्वितीये स्वारोचिषे रोचननामा वायुः । तृतीये चौत्तमे सत्यजिन्नामा यम इन्द्रः । चतुर्थे तापसे पञ्चमे च रैवते त्रिशिखविभुनामानौ नासत्यदस्रावश्विना-विन्द्रौ । षष्ठे चाक्षुषे मन्द्रद्युम्नः, स एव च सप्तमे वैवस्वतेऽन्तरे पुरन्दरनामेन्द्रः । तमेतमष्टमकक्ष्यागतमिन्द्रमाचक्षते ।] त्रीनुक्तान् विहायावशिष्टा एकादश मनवः– स्वारोचिषः, उत्तमः, रैवतः, चाक्षुषः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्चेति । [प्रथमः स्वायम्भुवो मनुर्दशमकक्ष्यायां गतः । चतुर्थस्तापसो मनुः स्वयं विष्णुरेव । सप्तमो वैवस्वतः षोडश्यां कक्ष्यायां गतः । अपरे त्वेकादशात्र ।] दशसु पितृपतिषु पूर्वोक्तान् यमसोमकव्यवाहान् विहायान्ये सप्त । अष्टौ विष्णोर्द्वारपालकाः– जयः, विजयः, चण्डः, प्रचण्डः, नन्दः, सुनन्दः, कुमुदः, कुमुदेक्षण-श्चेति । अष्टौ प्रधानगन्धर्वाः । अष्टौ प्रधानाप्सरसः । विश्वकर्मा ।

१. मरीचिं पूर्वे विद्वांस एकान्नविंश्यां कक्ष्यायां पठन्ति । अयं भूतवायुमानीति गीतातात्पर्ये स्थितम् । आकाशमानी भूतवायुमानी च समानाविति चैतरेयभाष्यादवगम्यते । तेन मरीचिरेकान्नविंश्यां पठितेषु प्रधानः, अष्टादश्यां कक्ष्यायां पठिताद् गणपतेः किञ्चिन्न्यूनः । प्रायस्तत्समान इति ज्ञायते ।

२२-७-११



चित्रगुप्तः । सूर्यसारथिररुणः । नन्दी । ऐरावतः । सुरभिः । कल्प-वृक्षादिदेवताः । अहोरात्रदेवते । पूर्णिमामावास्यादेवते । अभिजिद्-विषुवद्देवते । ओषधिवनस्पत्यभिमानिनः । हविःकपालाद्यभिमानिनश्च । कर्मणा देवत्वं गताः शतं राजर्षयश्च– पृथुः, कार्तवीर्यः, शशबिन्दुः, प्रियव्रतः, उत्तानपादः, मान्धाता, गयः, ककुत्स्थः, नहुषः, अम्बरीषः, आर्षभो भरतः, दौःषन्तिर्भरतः, मरुत्तः, हरिश्चन्द्रः, प्रह्लादः, परीक्षि-दाद्याश्च । त एतेऽग्नेः शतगुणावराः ।

२०. द्वादशादित्येषु चरमः पर्जन्यः । अनिरुद्धभार्या उषा विराडाख्या । चन्द्रभार्या रोहिणी । सूर्यभार्या सञ्ज्ञा । यमभार्या श्यामळा । वरुणभार्या च गङ्गा । एकान्नविंशकक्ष्यापठितेभ्यो मरीच्यादिभ्यो द्विगुणावराः ।

२१. उक्तवक्ष्यमाणेभ्योऽन्ये अनाख्याताः देवाः । [केचिन्नैतां कक्ष्यां परिगणयन्ति] ।

२२. अग्निभार्या वाङ्मानिनी स्वाहा । एकान्नविंशकक्ष्यापठितेभ्यः पञ्च-गुणावरा ।

२३. जलमानी बुधः । स्वाहातो द्विगुणावरः ।

२४. अश्विभार्या नाममानिनी उषाः । स्वाहातो दशगुणावरा ।

२५. कुजः[१] ।

२६. पृथिवीमानी सूर्यतनयः शनिः ।

२७. कर्ममानी वरुणपुत्रः पुष्करः ।

२८. काश्यपभार्याऽदितिः, या देवकी बभूव । द्रोणाख्यवसुभार्या धरा, या यशोदा बभूव ।

१. अयमप्येकोनविंश्यां कक्ष्यायां पठनीय इत्येके ।

२९. कृष्णपत्नीत्वेन जाता अग्निपुत्राः १६,१०० सङ्ख्याकाः । आसु त्वष्टृपुत्री कशेरुः किञ्चिदधिका ।

३०. अनाख्याता आजानजा देवाः । शतं गन्धर्वाः । शतमप्सरसः । [शतं कोटीनामृषयः सन्ति । तत्र पूर्वोक्तमृषीणां शतकं विहायावशिष्टाः] ९९,९९,९९,९०० ऋषयः । एकान्नविंशकक्ष्यापठितेभ्यः कर्मदेवेभ्यः शतगुणावराः ।

३१. पूर्वोक्तानां सप्तानां पितृपतीनां सन्ततिभूताश्चिरपितरः । आजानदेवेभ्यः शतगुणावराः ।

३२. पूर्वोक्तं गन्धर्वाणामप्सरसां च शतमष्टोत्तरं विहायावशिष्टा गन्धर्वा अप्सरसश्च । चिरपितृभ्यः शतगुणावराः ।

३३. मनुष्यगन्धर्वाः । गन्धर्वेभ्यः शतगुणावराः ।

३४. चक्रवर्तिनः । मनुष्यगन्धर्वेभ्यः शतगुणावराः ।

३५. नरोत्तमाश्चतुर्वर्णगताः । चक्रवर्तिभ्यः शतगुणावराः ।

* * *

एतेषु च विशिष्योपनिषदुक्ता नामादिमारुतान्ता यथा–

| | | | |
|---|---|---|---|
| १. नाममानिनी उषाः | [२४] | ८. बलमानी प्रवहः | [११] |
| २. वाङ्मानिनी स्वाहा | [२२] | ९. अन्नमानी अनिरुद्धः | [१०] |
| ३. मनोमानी पर्जन्यः | [२०] | १०. अम्मानी अहम्प्राणः | [९] |
| ४. सङ्कल्पमानी मित्रः | [१७] | ११. तेजोमानी पुरन्दरः | [८] |
| ५. चित्तमानी अग्निः | [१५] | १२. आकाशमानिनी उमा | [७] |
| ६. ध्यानमानी वरुणः | [१३] | १३. स्थिरस्मृतिमानी शिवः | [५] |
| ७. विज्ञानमानी चन्द्रः | [१२] | १४. आशामानिनी भारती | [४] |

१५. जीवमानी मुख्यप्राणः [३]



[बलमिति ज्ञानबलं देहबलं च । तदुभयमानी भूतवायुः । अन्नमिति ज्ञानरतिरूपं ज्ञानान्नं बाह्यमन्नं च । तदुभयमानी अनिरुद्धः । आप इति ज्ञानतृप्तिर्बाह्यजलं च । तदुभयमानी अहम्प्राणः । तेज इति मानसं प्रतिभानं बाह्यं च । तदुभयमानी पुरन्दरः । आकाश इति स्थिरा प्रतिभा भूता-काशश्च । तदुभयमानिन्युमा । ततः स्थिरस्मृतिमानी शिवः । तत आशाया अपरोक्षानन्दस्य मानिन्यौ सरस्वतीभारत्यौ । ततश्च जीवकलामानी मोक्षानन्दमानी च प्राणात्मा हिरण्यगर्भ इति ।]

तथाहि श्रुतिः– **'अथातः सम्भूतिः । परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणाद-निरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते'** इति ।

**इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम् ।**
**तारतम्यस्य मीमांसां विनेयजनवाञ्छया ॥**

**इत्याचार्यगोविन्दस्य कृतिषु तारतम्यमीमांसा समाप्ता**

—०—

२२-७-११

# मन्त्राणां पादानुक्रमणी

### अ



### आ



### इ



### उ



२२-७-११



### ऊ



### ऋ



### ए



### क



### ग



### च



### ज



### त



### द

२२-७-११





—०—